तत्तयोर्बन्धमोक्षं त्वं, कुर्वैकं सह दुर्नयम् । ततो राजा जगादैवं, कालकूटात्सुधा हहा ॥ २४ ॥ तावुभावपि तादृक्षौ, त्वं तु सर्वोपकारकृत् । अहो विधेर्विचित्रेयं, सृष्टिर्दृष्टा मया स्फुटा ॥ २५ ॥ हे सत्पुरुष! वाक्यं ते, करिष्येऽहं कियत्त्विदम् । आकर्णय त्वदायत्तं, पुनरस्तीह कारणम् ॥ २६ ॥ पुरस्यास्य समीपस्थ, एकशृङ्गाभिधे गिरौ । देवताधिष्ठिता त्वेका, सुगुप्ता कूपिका वरा ॥ २७ ॥ मीलदुन्मीलदस्त्यस्या, मुखं नेत्रपुटे इव । अन्यच्च सलिलग्राही, भीतश्चेन्मृत एव सः ॥ २८ ॥ स्तम्भितस्यैव पुत्रेणानीतेनास्य जलेन चेत् । आच्छोट्यते पिता बध्यस्त्रीन् वारान् वीरकुञ्जर! ॥ २९ ॥ बन्धमोक्षो भवेत्तर्हि, नान्यथापि कथञ्चन । इत्याकर्ण्य वणिग् स्माह, करिष्यामीदमप्यहम् ॥ १३० ॥ सामग्रिकां ततः कृत्वा, गतौ द्वावपि तत्र तौ । कूपिकाया मुखे क्षिप्तो, वणिग्पुत्रो विकाशिनि ॥ ३१ ॥ निर्भयो मञ्चिकारूढो, राज्ञाऽऽकृष्य जलान्वितः । दक्षेण विकसद्वक्त्रः, कूपिकाया बहिष्कृतः ॥ ३२ ॥ गृहीत्वा तं जलं मङ्क्षु, तुरगीभूतराक्षसम् । आरुह्य तौ समायातौ, नगर्यामिह मन्दिरे ॥ ३३ ॥ लोभाकरोऽभिषिक्तः स्वजनको गुणवर्मणा । त्रिस्तेन सलिलेनाशु, ततः सज्जीबभूव सः ॥३४॥ लोभनन्दी द्वितीयस्तु, तथैवास्थाद् व्यथार्दितः । पुत्रं विना यतो नैव, बन्धमोक्षः कथञ्चन ॥ ३५ ॥ गुणवर्मोपरोधेन, तुष्टेन विजयेन्दुना । गृहान्तः स्थापितः सोऽयं, द्वितीयो विरसं

श्रीजयतिलकसूरिविरचितं—

# श्रीमलयसुन्दरीचरित्रनाममहाकाव्यम् ।

ॐ नमः श्रीजिनाय.

चतुरङ्गो जयत्यर्हन्, दिशन् धर्मं चतुर्विधम् । चतुष्काष्ठासु प्रसृतं, जेतुं मोहचमूरिव ॥ १ ॥ जन्यत्याद्यार्हतो रक्ताः, करपादाङ्गुलीनखाः । विंशतिस्थानकश्रीणां, कौङ्कुमास्तिलका इव ॥ २ ॥ दीपालिकापुरे यस्य, फणामणिमिषात्सदा । पार्श्वोऽश्रीनिर्गमं लक्ष्मी-प्रवेशं च करोतु सः ॥ ३ ॥ सर्वार्थसिद्ध्यनीहोऽपि, मम सर्वार्थसिद्धये । सिद्धार्थजनकोऽप्यस्तु, जिनः सिद्धार्थनन्दनः ॥ ४ ॥ येन बोधप्रदीपेन, निरस्याभ्यन्तरं तमः । ममात्मा निर्मलीचक्रे, तस्मै श्रीगुरवे नमः ॥ ५ ॥ श्रीसूरिमन्त्रराजस्य, प्राक्पदेषु प्रतिष्ठिता । श्रीगौतमांह्रिभक्ताऽस्तु, प्रसन्ना मे सरस्वती ॥६॥ प्राकृतेनात्र यैरर्था, मदर्थमिव सञ्चिताः । पितृकल्पाः कवीन्द्रास्ते, जयन्ति जिनशासने ॥ ७ ॥ तर्जयन्तो जयन्त्यत्र,

चिरं कुरु ॥२५॥ मा स्म गृह्णन् द्विषो राज्यं, रुलन्मा स्म प्रजाप्यसौ । मा भूद् धरा निराधारा, निर्नाथा भूप मा वयम् ॥ २६ ॥ त्यक्ष्यन्ति यदि धीरत्वं, स्वामिन् ! युष्मादृशा अपि । निराधारमिदं कुत्र, स्थास्यत्यत्र समादिश ? ॥ २७ ॥ यद्देवी विगतप्राणा, जाता तत्रापि कारणम् । कर्मणो हि परिणामः, संसारासारता तथा ॥ २८ ॥ यतः—राजानः खेचरेन्द्राश्च, केशवाश्चक्रवर्त्तिनः । देवेन्द्रा वीतरागाश्च, मुच्यन्ते नैव कर्मणः ॥ २९ ॥ तन्नाथ ! कर्मसाहात्म्यं जानतां भवतामिह । युज्यते नेदृशं कर्त्तुं, सर्वथा सुविवेकिनाम् ॥ २३० ॥ जगादाथ प्रजानाथः, शोकसम्पूर्णमानसः । अहो मन्त्रीश्वराः! सर्वमवगच्छाम्यहं पुनः ॥ ३१ ॥ देव्याः स्नेहेन मूढात्मा, युक्तायुक्तं न वेद्म्यहम् । अन्यच्चाङ्गीकृतो मृत्युस्तया सार्द्धं मया तदा ॥ ३२ ॥ अकुर्वन् सुकरञ्चापि, स्वजिह्वाजल्पितं वचः । असत्यवादिनां मध्ये, रेखां पूर्वां स्पृशाम्यहम् ॥ ३३ ॥ दिनानीयन्ति नो जातं, ममाऽऽजन्म वचोऽन्यथा । म्रियेऽहं नो यदीदानीं, तन्मे यात्यमृषाव्रतम् ॥ ३४ ॥ तावज्जीवन्ति सन्तोऽत्र, यावत्कुर्वन्ति भाषितम् । मृता एवान्यथा सत्यमेवैतेषां हि जीवितम् ॥ ३५ ॥ कुरुताहो ततः शीघ्रं, मेऽस्या अपि च तां चिताम् । मध्ये चितानलं येन, ददे दुःखजलाञ्जलिम् ॥ ३६ ॥ ब्रुवन्निति नृपो वार्यमाणोऽमात्यैरनेकधा । देवीस्नेहेन मरणान्, न व्यरंसीत्कथञ्चन ॥ ३७ ॥

दुर्जनाः पण्डिता इव । येषां भयेन काव्यानि, न कूटानि पठन्त्यमी ॥ ८ ॥ प्रकृत्या प्राकृतं प्राज्ञैर्दुर्व्याख्येयं यथास्थितम् । अतः संस्कृत्य पूर्वार्थान्, श्रोतृणां कथयाम्यहम् ॥ ९ ॥ इत्थं कृतनमस्कारो, भव्यानां बोधहेतवे । धर्मरत्नत्रयाख्यान–मयं शास्त्रं तनोम्यहम् ॥ १० ॥ धर्मो मङ्गलमुत्कृष्टं, धर्मः सर्वसमृद्धिदः । धर्मः शर्मकरो नित्यं, धर्मः कर्ममलापहः ॥ ११ ॥ सन्तानतारको धर्मो, धर्मः पूर्वजयावनः । अपकीर्त्तिहरो धर्मो, धर्मः कीर्त्तिविवर्द्धनः ॥ १२ ॥ तक्रादिव नवनीतं, कमलं कर्दमादिव । इव मुक्तामणिर्वंशात्सारं धर्मो नृजन्मनः ॥ १३ ॥ वेदवाक्येषु सर्वेषु, प्रणवः प्रथमो यथा । पुरुषार्थेषु सर्वेषु, तथा धर्मो निगद्यते ॥ १४ ॥ दुर्गतिप्रपतत्प्राणि–धारणाद्धर्म उच्यते । ज्ञानदर्शनचारित्र–रत्नत्रयमयः स तु ॥ १५ ॥ जीवाजीवादितत्त्वानामवबोधो यतो भवेत् । तदत्र कथ्यते सम्यग्ज्ञानरत्नं विवेकिभिः ॥ १६ ॥ तृतीयं लोचनं ज्ञानमदृष्टार्थप्रकाशनम् । द्वितीयं च रवेर्बिम्बं, दृष्टेतरतमोऽपहम् ॥ १७ ॥ ज्ञानं निष्कारणो बन्धुर्ज्ञानं यानं भवाम्बुधौ । ज्ञानं प्रस्खलतां यष्टिर्ज्ञानं दीपस्तमोभरे ॥ १८ ॥ ज्ञाने द्वियते जन्तुः, पतितोऽपि महापदि । एकश्लोकार्थबोधेन, यथा मलयसुन्दरी ॥ १९ ॥ **तथाहि–**

द्वीपेषु मध्यमो जम्बूद्वीपोऽस्तीह महीतले । राकेन्दुरिव यो वृत्तो, लवणोदधिनाऽऽवृतः ॥२०॥ लक्षयोजनमानस्य,

म्रियमाणान् विना त्वां कोऽधुनाऽस्मानुद्धरिष्यति ? । इत्येवं याचके लोके, पुरो राज्ञः प्रजल्पति ॥ ५१ ॥ धीरता शूरता चापि, दक्षता च गभीरता । दानं सत्यं च कारुण्यं, दाक्षिण्यमुपकारिता ॥ ५२ ॥ निराधारा गुणाः सर्वे, सञ्जाता एव-मादयः । सहास्माभिर्नरेन्द्रेति, ब्रुवाणे पण्डिते जने ॥ ५३ ॥ हा देवेदं न युक्तं ते, सर्वस्मिन्निति वादिनि । ददद्दानं नराधीशः, प्राप गोलानदीतटम् ॥ ५४ ॥ दशभिः कुलकम् । चितां कर्त्तुं समारेभे, मुक्त्वा तत्र शबं नरैः । अवतेरे नृपेणापि, स्नानं कर्तुं नदीजले ॥ ५५ ॥ जनशोकाश्रुकोष्णेषु, गोलानद्या जलोर्मिषु । स्नानं कुर्वन्नृपो यावत्तस्थौ सोत्साहमानसः ॥ ५६ ॥ अनुश्रोतस्तरत्तावत्, शुष्कं स्थूलतमं तदा । पुण्यै राज्ञो जनानाञ्च, काष्ठमेकं समाययौ ॥५७॥ तद् दृष्ट्वा मन्त्रिणोऽवोचन्, नद्यम्भस्तारकान् प्रति । चितायोग्यानि काष्ठानि, सन्ति स्तोकतराणि भोः ! ॥५८॥ आकर्षत ततो वेगादिदं काष्ठं समापतत् । इत्यादिष्टाः प्रविष्टास्ते, गम्भीरे निम्नगाजले ॥ ५९ ॥ तदाकृष्य नदी-मध्यात्, तीरमानीय तारकैः । मुक्तं राज्ञा समालोकि, सन्नद्धं बहुबन्धनैः ॥ २६० ॥ राजादेशेन बन्धेषु, छुर्या छिन्नेषु सेवकैः । तदन्तःशुषिरं वेगादूर्ध्वं विघटितं द्विधा ॥ ६१ ॥ मध्ये तस्य विलिप्ताङ्गी, गोशीर्षचन्दनद्रवैः । कस्तूरिघनसारादिगन्धद्रव्यैश्च चर्चिता ॥ ६२ ॥ कण्ठावलम्बिसन्मुक्ताहारा निद्रालुलोचना । देवी चम्पकमाला सा,

लक्षणं तस्य वेत्ति कः ? । सप्तवर्णोऽपि पड्वर्षधरो यः कथितो बुधैः ॥ २१ ॥ तस्यान्तर्भरतक्षेत्रं, ख्यातमक्षीणसम्पदा । षट्खण्डमप्यखण्डं यत्साध्यते चक्रवर्त्तिना ॥ २२ ॥ अस्तीह भरतक्षेत्रे, नाम्ना चन्द्रावती पुरी । अन्यायो हन्यते यस्यां, न्याय एव विजृम्भते ॥ २३ ॥ भूरीश्वरगृहा भाति, प्रभूतधनदाश्रिता । याष्टापदाङ्करत्नौका, अपूर्वेवालकापुरी ॥ २४ ॥ भद्रशालावृता भास्वत्सौमनस्याढ्यनन्दना । मेरुवद्या सुवर्णश्रीः, शोभतेऽपण्डका परम् ॥ २५ ॥ यस्यां स्फाटिकहर्म्याणि, भित्तैः स्वच्छतयाऽभितः । गुप्तभावान् विवृण्वन्ति, मित्राणीव परस्परम् ॥ २६ ॥ नक्षत्रदर्शनाद्रात्रिर्यस्यां पुर्यनुमीयते । ध्वान्ते मणिगृहैर्व्वरते, दिनं चार्कविलोकनात् ॥ २७ ॥ श्रीवीरधवलस्तत्र, मित्रतुल्योऽभवन्नृपः । सच्चक्राह्लादको नित्यं, न कठोरकरः पुनः ॥ २८ ॥ यस्य चापे नमत्कोटौ, प्रणेमू रिपुमौलयः । त्यक्तजीवे पुनर्बाणे, निर्जीवा द्वेषिणोऽभवन् ॥ २९ ॥ कोकिलेव प्रियालापाऽऽनन्ददेन्दुकलेव या । गङ्गेव स्वच्छहृदया, कमलेव जनप्रिया ॥ ३० ॥ रतिरूपाधिकरूपा, शीलालङ्कारधारिणी । प्रिया चम्पकमालाऽस्य, सा सर्वान्तःपुरीवरा ॥ ३१ ॥ द्वितीयाऽपि प्रिया तस्य, नाम्ना कनकवत्यभूत् । सौभाग्यभारादिवैपन्नताङ्गी कुचभारतः ॥ ३२ ॥ ताभ्यामिव रतिप्रीतिभ्यामभ्यासमुपेयुषः । कामस्येव ययौ कालो, भूपालस्य सुखैः कियान् ॥ ३३ ॥ अथान्यदा नृपं दृष्ट्वा, विच्छायं चिन्तया मुखे ।

बन्धुप्रियस्य ते । वीरपालाभिधो वीरधवलस्याभवत्पुरा ॥ ३०० ॥ विविधान् स वधोपायांश्चिन्तयन् राज्यकाम्यया । भूपस्य घातकीभूय, प्रविष्टो मन्दिरेऽन्यदा ॥ १ ॥ सोऽमुचन्नृपतेर्घातं, वञ्चयित्वा नृपोऽपि तम् । घातं तमेकघातेन, पातयामास भूतले ॥ २ ॥ अन्तेऽसौ शुभभावेन, मृत्वोत्पन्नोऽत्र पर्वते । प्रचण्डो मे परीवारे, भूतोऽपश्यद्भतं भवम् ॥ ३ ॥ स्मृत्वा तदात्मनो वैरं, नरनाथस्य पृष्ठतः । छलं गवेषयन्नेष, परिबभ्राम सर्वतः ॥ ४ ॥ न शशाक पुनः किञ्चित्कर्त्तुं राज्ञः सुकर्मणः । ततोऽसौ चिन्तयामास, पापिष्ठो दुष्टचेतसि ॥ ५ ॥ देव्यां चम्पकमालायां, प्रेमबन्धो नरेशितुः । स कोऽपि दृश्यते वीरधवलस्यापरे न यः ॥ ६ ॥ मरणेन ततो देव्या, म्रियतेऽवश्यमप्ययम् । एषापि न मया हन्तुं, शक्यते किञ्च नैकिका ॥ ७ ॥ छन्नो भूत्वा छलं पश्यन्नपहर्त्तुमनास्ततः । बभ्राम पृष्ठतो लग्नो, दुष्टो भूतः स सुन्दरि ! ॥ ८ ॥ अथैका भुवने सुप्ता, निद्राणा तेन सुन्दरि ! । अपहृत्यात्र मुक्ता त्वं, शैले मलयनामनि ॥९॥ ततस्त्वमागतेदानीं, भवने मिलिताऽत्र मे । तुभ्यं ददामि किं? ब्रूहि, सफलो मेऽस्तु सङ्गमः ॥ ३१० ॥ ततोऽभाणि मया देवी, यदि तुष्टासि देवि ! मे । ततोऽपत्यविहीनायाः, प्रसीदापत्यदा भव ॥ ११ ॥ इतश्चोत्सुकचित्तेन, नृपेणाभाणि वल्लभा । देव्या किं कथितं देवि !, परोपकृतिलीनया ॥१२॥ ऊचे चम्पकमालाऽथ, देव ! देव्येति भाषि-

सम्भ्रान्तयाऽऽशु पप्रच्छे, देव्या चम्पकमालया ॥ ३४ ॥ राजा जगाद सोद्वेगं, चिन्ताहेतुं प्रिये ! शृणु । अत्रैवास्मत्पुरे द्वौ स्तो, बान्धवौ श्रेष्ठिपुङ्गवौ ॥ ३५ ॥ अन्योऽन्यं स्नेहलौ लोभ—नन्दिलोभाकराभिधौ । कुर्व्वाणौ हट्टवाणिज्यं, तौ दिनानि व्यतीयतुः ॥ ३६ ॥ गुणवर्माभिधो लोभाकरस्यास्ति सुतो गुणी । लोभनन्दी पुनर्व्यूढभूरिभार्योऽप्यनन्दनः ॥ ३७ ॥ अथान्यदा तयोर्हट्टासीनयोरागतः पुमान् । एको भद्राकृतिस्तत्र, भ्रमन्नदृष्टपूर्वकः ॥ ३८ ॥ आकारादिगुणैर्ज्ञात्वा, तस्य सश्रीकतां तदा । ताभ्यामासनदानादि—प्रतिपत्तिर्विनिर्ममे ॥ ३९ ॥ तत्रैव तिष्ठता तेन, विश्वस्ते नैकदा तयोः । अभाणि तुम्बमेतन्मे, रक्षतं कति वासरान् ॥ ४० ॥ ताभ्यामादाय हट्टान्तरुद्बध्याऽऽमोचि तुम्बकम् । गालं गालं निपेतुश्च, ततोऽस्माद्रसबिन्दवः ॥ ४१ ॥ अधस्तादायसीस्तैस्तु, दृष्ट्वा हेमीकृताः कुशीः । लोभान्धाभ्यामगोप्याभ्यां, तत्तुम्बं रससंयुतम् ॥ ४२ ॥ कतिचिद्दिनपर्यन्ते, याचमाने तु तन्नरे । तौ द्वौ मायाविनौ भूत्वा, श्रेष्ठिनावूचतुर्गिरा ॥ ४३ ॥ मूषकैर्जग्धबन्धं ते, पतित्वाऽभाजि तुम्बकम् । खण्डान्येवात्र दृष्टान्यावाभ्यां सत्पुरुषाग्रणीः ! ॥ ४४ ॥ तुम्बान्तरस्य खण्डानि, दर्शितान्युपलक्ष्य सः । दक्षोऽज्ञासीदिमान्यन्यतुम्बस्य शकलानि वै ॥४५॥ ज्ञात्वा तुम्बे रसं लोभं, गतावेतौ मृषोत्तरैः । सङ्गोप्य तुम्बकं मां हि, विप्रतारयतोऽधुना ॥ ४६ ॥ तत्कथयामि

तव स्थाने विकृत्याथ, त्वदङ्गसदृशं शबम्। तस्थौ तत्रैव भूतः स, प्रच्छन्नः पापचेष्टितः ॥ २६ ॥ ततोऽकस्माद-
जीवां त्वां, विलोक्य प्रलपन्प्रियाम्। यद् दुःखमन्वभूद्राजा, तज्जानाति स एव हि ॥ २७ ॥ युष्मद्दुःखे श्रुते
प्राणेश पप्रच्छेऽथ सा मया। किं जीविष्यति भूपालो?, मिलिष्यति कदा मम? ॥ २८ ॥ तयाऽवादि शुभे! सप्तप्रहरान्ते
नृपस्तव। अहो दुस्सहदुःखार्त्तः, पुनर्जीवन् मिलिष्यति ॥ २९ ॥ पृच्छाम्यहं पुनर्यावत्, क्व मे राजा मिलिष्यति।
एका विद्याधरी तावत्, सचेटी नभसाऽऽययौ ॥ ३३० ॥ इतश्च मम पश्यन्त्या, एव देवी तिरोदधे। एकाकिन्याः
समीपे मे, प्राप विद्याधरी तु सा ॥ ३१ ॥ विस्मिता खेचरी स्माह, मामालोक्य तदैकिकाम्। दिव्यरूपा शुभे!
काऽसि, शून्ये त्वमिह पर्वते! ॥ ३२ ॥ ततः स्वकीयो वृत्तान्तो, मया तस्या निवेदितः। तया च भणितं हा हा,
विजृम्भितमहो विधेः ॥ ३३ ॥ यद्येषा भूपतेः कान्ता, सुरूपा कुलसम्भवा। हा हा निर्मानुषे शैले, पतिता कलिता
गुणैः ॥ ३४ ॥ शुभे! त्वां नगरीं चन्द्रावतीं भूयो नयाम्यहम्। साधयिष्यामि विद्यां किन्त्विदानीमिह पर्वते ॥ ३५ ॥
साधयामि न चेद्विद्यामधुना तन्न सिध्यति। तद्दुःखे पतितायाः कमुपकारं करोमि ते? ॥ ३६ ॥ एष एवोपकारस्ते,
ममास्तु कमलेक्षणे!। यदत्र क्षणमात्रेण, प्रियो मम समेष्यति ॥ ३७ ॥ स्त्रीलोलः स पुनश्चेत्त्वामीदृग्रूपामिहेक्षिता।

राज्ञश्चेत्, रसं गृह्णाति सोऽप्यमुम् । वैदेशिकस्य मे हा हा, द्विकाऽप्येषोऽहिवेगतः ॥ ४७ ॥ ध्यात्वेति श्रेष्ठिनौ तेन, तावूचाते उभावपि । भो ममार्पयतं तुम्बं, मा कार्ष्टं कपटोत्तरम् ॥ ४८ ॥ युवयोर्युज्यते नेदृग्, कर्त्तुं न्यायवतोऽर्थतः । अन्यथा भविताऽनर्थो, महालोभवशात्मनोः ॥ ४९ ॥ब्रुवाणावुत्तरौ तौ तु, तदैव कुपितो नरः । स्तम्भयित्वा तथा सोऽगात्, गृहतो द्विकयोः क्रमात् ॥ ५० ॥ यथा चलयतो नाङ्गं, विस्फुटत्सन्धिबन्धनम् । जल्पन्तावितिं तौ दीनौ, पात पात म्रियावहे ॥ ५१ ॥ ग्रामान्तरादितश्चागात्, लोभाकरसुतोऽखिलाम् । वार्त्तां कुटुम्बादज्ञासीत्, तथावस्थौ विलोकितौ ॥ ५२ ॥ मन्त्रवादादिके तेन, सविशेषेऽथ कारिते । विशेषाद्ववृधे पीडा, निराशास्तेऽभवंस्ततः ॥ ५३ ॥ उत्तिष्ठते यतोऽवह्निस्तत एवोपशाम्यति । अतस्तमेव पुरुषमानयामि कुतोऽप्यहम् ॥ ५४ ॥ ज्ञात्वेति गुणवर्मा तं, नरं द्रष्टुमथाचलत् । सहायमेकमादाय, तत्पुरुषोपलक्षकम् ॥ ५५ ॥ मन्दीभूतं सहायं तमपि मुक्त्वा क्वचित्पुरे । एक एव स बभ्राम, पितुर्दुःखेन दुःखितः ॥ ५६ ॥अथैकं नगरं दृष्ट्वा, धनाढ्यापणमन्दिरम् । निर्मानुषं रम्यतमं, विस्मितः प्रविवेश सः ॥ ५७ ॥ ददर्शैकं नरं तत्र, प्रदेशे सुन्दरं क्वचित् । पप्रच्छे च स तेनैवं, कुतस्त्वं वीरकुञ्जर ! ॥ ५८ ॥ अभाणि श्रेष्ठिपुत्रेण, पान्थः खिन्न इहाविशम् । कोऽसि त्वं किमिहैकाकी, शून्या कुङ्काऽपि

## ॥ अथ द्वितीयः प्रस्तावः प्रारभ्यते ॥

अथापूर्वेव सा बाला, यौवनेन विनिर्ममे। समुल्लासयताऽङ्गेषु, लावण्यं लोचनप्रियम् ॥ १ ॥ खलवत्कुटिलाः केशाः, मध्यं तुच्छं कुमैत्रवत् । सन्मनोरथवन्नामात्, तस्याः स्तनयुगं हृदि ॥ २ ॥ नासिका सरला तस्याः, साधूनां चित्तवृत्तिवत् । केशपाशः प्रलम्बश्च, मैत्र्यभावः सतामिव ॥ ३ ॥ सुस्निग्धं लोचनद्वन्द्वं, जनन्या इव मानसम् । कटाक्षवीक्षणं वक्रं, तस्याः सापत्न्यकृत्यवत् ॥ ४ ॥ विलासिन्या इवाचारः, सरागोऽधरपल्लवः । कण्ठो लेखाभिरामोऽभूत्तस्याः स्वर्ग इवान्वहम् ॥ ५ ॥ सुकुमारं वपुस्तस्याः, शालिग्रामसुवर्णवत् । मनोहरवरच्छायं, चाभवद्वटवृक्षवत् ॥ ६ ॥ सविलासा गतिस्तस्याः, प्रशस्या वनभूरिव । विशालं जघनं चासीत्, भूपानामिव पत्तनम् ॥ ७ ॥ अङ्गे मालिकवत्सर्वेऽवयवाः सुमनोहराः । तस्या मलयसुन्दर्या, बभूवुर्यौवनागमे ॥ ८ ॥ इतश्चात्रैव भरते, पृथ्वीस्थाने पुरेऽभवत् । विक्रमाक्रान्तभूपालः, सूरपालो महीपतिः ॥ ९ ॥ तस्यासीन्मेदिनीभर्त्तु रतिरूपानुकारिणी । पद्मावतीति दयिता, सर्वान्तःपुरसुन्दरी ॥ १० ॥ राज्ञस्तस्य कुमारोऽभूद्, माररूपो वपुःश्रिया । महाबलोऽभिधानेन, वीर्येणापि महाबलः ॥ ११ ॥ अन्यदोदारचित्तस्य, कुमारस्यास्य सङ्गतः । विद्यासिद्धः पुमानेकः, स तेनावर्जितो भृशम्

का पुरी ? ॥ ५९ ॥ नरेणाभाणि भो भद्र !, शृणु त्वं पृष्टमात्मनः । श्रियेदं स्वःपुरस्पर्द्धि, नगरं कुशवर्द्धनम् ॥ ६० ॥ अत्रासीत् भूपतिः सूरः, सूरनामा गुणाग्रणीः । जयविजयचन्द्राख्यौ, तस्यावां तनयावुभौ ॥ ६१ ॥ जयचन्द्रो मम भ्राता, ज्येष्ठो राज्य उपाविशत् । पितर्युपरतेऽहन्त्वहङ्कारान्निरगां पुरात् ॥ ६२ ॥ सर्वत्राहं भ्रमन् पुर्यां, चन्द्रावत्यां गतोऽन्यदा । तदुद्याने मया दृष्टो, विद्यासिद्धो नरो वरः ॥ ६३ ॥ किन्त्वतीसाररोगेण, स तथा व्यथितो भृशम् । यथा न चलितुं नैव, वक्तुं शक्तो मनागपि ॥ ६४ ॥ ततः करुणया सैष, प्रत्यकारि मया तथा । यथाऽल्पैर्वासरै-र्जज्ञे, सुखेन पटुविग्रहः ॥ ६५ ॥ तत्पृष्टेन मयाऽऽख्याते, नामस्थानादिके निजे । विद्ये तेन वितीर्णे द्वे, प्रसन्नमनसा मम ॥ ६६ ॥ स्तम्भकर्त्री वश्यकर्त्री, पाठसिद्धे उभे अपि । रसतुम्बं तथा चैकं, दत्त्वाऽहं तेन जल्पितः ॥ ६७ ॥ दुःखेनैव मयाऽग्राहि, स्वसिद्धो दुर्लभो रसः । अस्यांशस्पर्शमात्रेण, लोहं भवति काञ्चनम् ॥ ६८ ॥ रक्षितव्यं प्रयत्नेन, ततोऽयं सर्वदा त्वया । ययौ श्रीपर्वते सिद्धो, दत्त्वा शिक्षां ममेति सः ॥ ६९ ॥ परिभ्रमन् प्रविष्टोऽहं, चन्द्रावत्यां पुनः पुरि । लोभाकरलोभनन्दिश्रेष्ठिनोरापणे गतः ॥ ७० ॥ दक्षाभ्यां प्रतिपत्त्याऽहं, ताभ्यामावर्जितस्तथा । विश्वस्तेन यथा तत्र, तत्तुम्बं न्यासितं मया ॥ ७१ ॥ स्थित्वाऽऽक्षिप्तः पुरीलक्ष्म्या, तत्राहं कति वासरान् । मातुरुत्कण्ठितः स्वीयपुरं

यावत्तावन्न्यवेदयत् । गत्वा कनकवत्येतत्, सविशेषं क्षमापतेः ॥ २ ॥ राजा समाययौ तत्र, ततो रोषारुणेक्षणः । हतहतेति जल्पद्भिः, सुभटैर्वेष्टितो भृशम् ॥ ३ ॥ कांदिशीका जगादाथ, राजकन्या विमूढधीः । भविष्यसि कथं त्वं हा, कुमार प्रवराकृते ! ॥ ४ ॥ धिग् पापां विषकन्यां मां, या जाता क्षयकारिणी । पुण्यप्राग्भारलभ्यस्य, पुंरत्नस्य तवाधुना ॥ ५ ॥ मा भीस्त्वमपि मा व्यासीरनिष्टं किञ्चनापि मे । इति जल्पन् स्वधम्मिल्लात्, कुमारो गुटिकामधात् ॥ ६ ॥ गुटिकायाः प्रभावेण, प्रक्षिप्ताया मुखान्तरे । रूपं चम्पकमालाया, दृष्टाया राजसन्निधौ ॥ ७ ॥ कृत्वा कुमार आसीनाः, कुमार्याः सन्निधौ क्षणात् । तथाभूतं तमालोक्य, कुमारी च विसिष्मिये ॥ ८ ॥ भङ्क्त्वा तालकमुद्घाट्य, द्वारं यावत्समीक्षितम् । दृष्टा मातृयुता तावत्, राज्ञा मलयसुन्दरी ॥ ९ ॥ राज्ञा कनकवत्यास्याभिमुखं वीक्ष्य भाषितम् । प्रिये ! पश्य स्वयं तावत्, त्वया किं कथितं मम ? ॥ ११० ॥ यावदैक्षत मध्ये सा, कुमारीं मातृसंयुताम् । तावद्विलोक्य वेगेन, विलक्षवदनाऽभवत् ॥ ११ ॥ स्मयमानः कुमारोऽथ, जगादागच्छ हे स्वसः ! । राजा किं कुपितः कस्मै, किं मह्यमपि ? तद्वद ॥ १२ ॥ जल्पन्तीमिति चम्पकमालामालोक्य ते जनाः । आक्रोशन्ति स्म सर्वेऽपि, तामेव नृपवल्लभाम् ॥ १३ ॥ ततः कनकवत्याख्यत्, हारो दत्तोऽनया प्रभो ! । इहागताय कस्मैचिन्, नरा-

प्रत्युत्सुकोऽभवम् ॥ ७२ ॥ कथञ्चिद्विज्ञातरसौ, मया मार्गिततुम्बकौ । श्रेष्ठिनौ तौ स्फुरल्लोभौ, ददतुः कूटमुत्तरम् ॥७३॥ मृषोत्तरोचितं कृत्वा, प्रतीकारं तयोरहम् । आगतोऽत्र पुरं शून्यं, सर्वमैक्षिषि पैतृकम् ॥ ७४ ॥ श्रेष्ठिसूश्चिन्तयामास, स एवैष पुमान्ननु । पितरौ येन मे दुःस्थावस्थौ तौ विहितौ तदा ॥ ७५ ॥ तावन्नाविष्करोमि स्वं, यावत् सम्यगवैमि न । गुणवर्मेति व्यात्वोचे, सन्पुमानग्रतो वद ॥ ७६ ॥ ऊचे विजयचन्द्रोऽथ, यावद्दुःखाकुलोऽभवम् । सविस्मयश्च तावत्त्वं, पश्यन् मानुपमात्रकम् ॥ ७७ ॥ गतो राजकुलं रम्यमारूढो राजमन्दिरम् । भ्रातृजायां विजयाख्यामपश्यं तावदेकिकाम् ॥ ७८ ॥ युग्मम् ॥ वृत्तान्तं सा मया पृष्टा, पतदश्रुविलोचना । मधुरालापपीठादिदानपूर्वमभाषत ॥ ७९ ॥ पुरस्य बहिरुद्याने, मासं मासमुपोषितः । एको रक्ताम्बरो भिक्षुरत्रासीज्जनरागभाग् ॥ ८० ॥ भवद्भ्रात्रा नरेन्द्रेण, कारितः पारणं स तु । नृपाज्ञया मयाऽक्षेपि, जेमतोऽस्य समीरणः ॥ ८१ ॥ तस्य पाखण्डिनश्चित्तं, मद्रूपायां मयि स्थितम् । ततो गोधाप्रयोगेण, निशि सौधं स एयिवान् ॥ ८२ ॥ कामार्थं प्रार्थयमानो, वाक्यैर्मा सामदण्डजैः । बोध्यमानोऽपि पापः स, कथञ्चिद्विरराम न ॥ ८३ ॥ इतश्च राजा सम्प्राप्तः, द्वारदेशे निशम्य तत् । क्रुद्धस्तं बन्धयामास, सापराधं तपस्विनम् ॥ ८४ ॥ हन्यमानो जनैः प्रातर्निन्द्यमानश्च भूभुजा । भ्रमयित्वा पुरीमध्ये,

त्युक्तिपूर्वकम् । पश्यन्त्यां दीर्घया दृष्ट्या, कुमार्यामनिमेषया ॥ २७ ॥ ततो निःसृत्य केनापि, नज्ञातः स महाबलः । यथायातस्तथा यातः, स्वजनानां च सङ्गतः ॥ २८ ॥ युग्मम् । चिन्तयन् परिणेतुं तां, स उपायाननेकशः । पृथ्वीस्थानपुरं प्रापदविलम्बप्रयाणकैः ॥ २९ ॥ प्रणम्य चरणौ हारमर्प्पयामास तं पितुः । मृषोत्तरं च चक्रे स, कुमारः सारविक्रमः ॥ १३० ॥ चन्द्रावतीशपुत्रेण, सन्तुष्टेनैष सौहृदात् । लक्ष्मीपुञ्जाभिधानो मे, हारः सारः समर्पितः ॥ ३१ ॥ राजा जगाद हे वत्सातुच्छा कापि कला तव । मैत्री यदीदृशी जज्ञे, तेन स्तोकदिनैरपि ॥ ३२ ॥ प्रशंसन्निति तं पुत्रं, तं हारं दिव्यमादरात् । पद्मावत्यै कुमारस्य, जनन्यै व्यतरन्नृपः ॥ ३३ ॥ प्रशंसन्ती निजं पुत्रं देव्यपि हृष्टमानसा । निजकण्ठे निचिक्षेप, तं हारं कान्तिभासुरम् ॥ ३४ ॥ कुमारोऽथ निजे चित्ते, दध्याविति दिवानिशम् । पितृदत्तां कथं कन्यां, परिणेष्यामि तामहम् ? ॥ ३५ ॥ सुदुर्वाहा पुरस्तस्याः, कृता सन्धा मया तदा । निर्वाह्या कथमेषा तु ?, रहस्यं कस्य कथ्यते ? ॥३६॥ इति चिन्तापरे तत्र, समागाद्दूतपूरुषः ॥ चन्द्रावतीनरेन्द्रेण, प्रेषितः प्रीतिशालिना ॥ ३७ ॥ प्रणम्य भूपतिं दूतः, प्रतीहारप्रवेशितः । कार्यं निवेदयामास, क्षेमवार्त्तापुरस्सरम् ॥ ३८ ॥ अस्माकं स्वामिनो वीरधवलस्यास्ति भूपतेः । कुमारी मारभार्याभा, नाम्ना मलयसुन्दरी ॥ ३९ ॥ प्रारब्धे देव ! भूपेन,

चौरमारं स मारितः ॥ ८५ ॥ उत्पन्नो राक्षसो दुष्टः, परिणामवशेन सः । स्मृत्वाऽपमानं तं स्वीयं, गुरुवैरमुवाह च ॥८६॥ अत्रागत्य ततस्तेन, निवेद्य स्वं च वैरिणम् । हतस्ते बान्धवो राजा, भक्तिं कुर्वन्नपि क्षणात् ॥ ८७ ॥ जीवग्राहं ततो नष्टा, हन्यमाना भयात्प्रजाः । ऋद्ध्याऽप्यलङ्कृतं शून्यं, तेनेदं नगरं तव ॥ ८८ ॥ अहं तु तेन नश्यन्ती, धृत्वेत्यूचेऽनुरागिणा । यदि यास्यसि भद्रे ! त्वं, त्वामानेष्याम्यहं पुनः ॥ ८९ ॥ अतस्त्वया न गन्तव्यं, कर्त्तव्यं न भयं तथा । स्थिताया अत्र सर्वापि, तव चिन्ता पुनर्मम ॥ ९० ॥ इति स्थिते दिवा क्वापि, राक्षसो याति सोऽनिशम् । निश्यायाति पुनर्यान्ति, ममैवं वासरा इह ॥ ९१ ॥ अथोचे सा मया तस्य, मर्म किञ्चित्प्रकाशय । जित्वैनं वैरिणं येन, स्वं राज्यं वालयाम्यहम् ॥ ९२ ॥ सोवाचास्य शयानस्य, पादयुग्मं घृतेन चेत् । म्रक्ष्यते स्यात् महानिद्रावशोऽचेतनवत्तदा ॥ ९३ ॥ परं पुंसः करेणैव, पादाभ्यङ्गेऽस्य तादृशी । निद्राऽऽयाति न नारीणां, करस्पर्शेन कर्हिचित् ॥ ९४ ॥ अन्यच्च चरणाभ्यङ्गात्पूर्वं चेद्वेत्ति मानुषम् । पादाभ्यङ्गेऽपि नो दत्ते, सुखं हन्त्येव तं तदा ॥ ९५ ॥ इति भ्रातृप्रियाख्यातं, पुरवृत्तान्तमात्मनः । श्रुत्वा यावत्सहायाय, कस्मैचिच्चलितोऽस्म्यहम् ॥ ९६ ॥ तावत्त्वमपि मेऽत्रैव, मिलितोऽसि नरोत्तम ! । साहाय्यं कुरु येन स्युस्त्वादृशोऽन्योपकारिणः ॥ ९७ ॥ परकार्योद्यताः सन्तः, स्वकार्ये

मास, सैवैषा कापि देवता ॥ ७७ ॥ तदेषा मां रुषा कापि, गह्वरे क्षेप्यति ध्रुवम् । इति मत्वा कुमारो द्राग्, वज्र-मुष्ट्या जघान ताम् ॥ ७८ ॥ आरटन्ती ततो दीनवदना करुणस्वरम् । मुहुर्मुहुर्वदन्तीति, मुञ्च मुञ्च कृपानिधे ! ॥ ७९ ॥ मुक्ता करात्कुमारेण, कारुण्यादाशु सा सुरी । तथा नष्टा यथा तस्या, यान्त्या मार्गोऽपि नेक्षितः ॥१८०॥ निराधारः कुमारोऽथ, पपात सहसाम्बरात् । फलभारातिनम्रस्य, चूतवृक्षस्य मूर्द्धनि ॥ ८१ ॥ अनुभूय क्षणं मूर्च्छां, मीलिताक्षो नृपात्मजः । वनवातेन शीतेन, पुनः प्राप स चेतनाम् ॥ ८२ ॥ सहकारतलाधारपातादल्पव्यथान्वितम् । कुमारश्चिन्तयामास, प्रदेशेऽहं क हाऽपतम् ॥ ८३ ॥ शून्ये वसति वा शैले, वृक्षाग्रे भूतलेऽथवा । परपर्शेति धिया रात्रितमःस्तोमे करेण सः ॥ ८४ ॥ शिखरं चूतवृक्षस्य, ज्ञात्वा पक्कफलान्वितम् । शाखां भारक्षमामेष, सिषेवे पात-शङ्कया ॥ ८५ ॥ (हृदीति तेन चिन्तितम्) क्षणेनोत्तीर्य शिखरात्, चूतस्कन्धमुपागतः । कुमारश्चिन्तयामास, निशा-मध्ये निशातधीः ॥८६॥ अहो कथमवस्थां कां, सम्प्राप्तोऽपहृतस्तया ? । काहं सम्प्रति तं हारं, कथं द्रक्ष्यामि लोचनैः? ॥ ८७ ॥ प्रतिज्ञां पूरयिष्यामि, कथमम्बापुरःकृताम् । असम्प्राप्ते पुनर्हारे, हा माता जीविता कथम् ? ॥ ८८ ॥ देवीमृतेः कथं तातः, प्राणान् धर्त्तुं सहिष्यति । तन्मे संप्रति वंशस्य, संहारः समुपस्थितः ॥ ८९ ॥ इति ध्यायंस्तरु-

स्युः पराङ्मुखाः । धवलीकुरुते विश्वं, कलङ्कं नात्मनः शशी ॥ ९८ ॥ तावन्मात्रं सुखं न स्याद्यावन्मात्रं मनोऽसुखम् । अनुशोचयतस्तस्य, यं यं पश्यति दुःखिनम् ॥९९॥ निष्पेषः पिञ्जनं तर्क्ककर्त्तनं कूर्चताडनम् । कर्पासेनासुखं सोढं, परस्यान्याच्छादनाय भोः ! ॥ १०० ॥ तरवस्तरणेस्तापं, सूर्योऽम्भोल्लङ्घनक्रमम् । नौःसंक्षोभं च पाथोधेः, सोढा कूर्मः क्षितेर्भरम् ॥ १ ॥ नैव नद्यः पिबन्त्यम्भो, वृक्षाः स्वादन्ति नो फलम् । मेघाः शस्यञ्च नाश्नन्ति, क्रमोऽमीषां परार्थकृत् ॥ २ ॥ तत्तवैव प्रभावेण, परं वर्त्स्यति जीवितम् । प्रजानां भविता राज्यलाभो मेऽपि यशोभरः ॥ ३ ॥ वणिग् दध्यावतः पुंसो, ममोपकृतिभारितात् । कार्यं सेत्स्यति तत्कार्यं, काय दुष्करमप्यदः ॥ ४ ॥ ध्यात्वेति गुणवर्मा स, प्रतिपेदेऽखिलं हि तत् । विजयः स्माह कर्त्तव्यं, रक्षोऽङ्घ्रिम्रक्षणं त्वया ॥ ५ ॥ स्तम्भित्वाऽहं करिष्यामि, वशं चान्तर्मुहूर्त्ततः । कृतसहस्रजापेनामुं मन्त्रेणाशु राक्षसम् ॥ ६ ॥ मन्त्रयित्वेति सामग्रीं, मेलयित्वाऽखिलामपि । धीरौ तौ द्वावपि च्छन्नौ, सायं सौधेऽत्र तस्थतुः ॥ ७ ॥ अन्धकारे वने जाते, तत्रागात्सोऽपि राक्षसः । अद्याहो मानुषो गन्धो, वदन्निति पुनः पुनः ॥ ८ ॥ भद्रे ! ब्रूहि किमु क्वापि, किञ्चित्तिष्ठति मानुषम् ? । सोचेऽहं मानुषीहान्यः, कुतो मानुषसम्भवः ? ॥९॥ प्रसुप्तस्य ततः पादौ, गुणवर्मा वधूमिषात् । मर्दयामास निर्भीको, दक्षोऽलक्ष्योऽस्य रक्षसः ॥११०॥

पेनानेन सा वशा । तयोः कुमारयोर्जातविश्वासैवमभाषत ॥ २८ ॥ हे क्षत्रियकुमारौ ! यत्, पृष्टं तत् शृणुतं युवाम् । सैषा गोलानदी नाम्ना, तटे यस्याः स्थितौ युवाम् ॥ २९ ॥ इतश्चन्द्रावती नाम, समीपेऽस्ति महापुरी । श्रीवीरधवलो राजा, राज्यं तस्यां करोति च ॥ २३० ॥ कुमारश्चिन्तयामास, चित्रं चित्रमहो ! महत् । निपतन् निपतन् स्थाने, क्वाहं निपतितोऽधुना ? ॥ ३१ ॥ तातेन प्रेषितो यत्र, यदेव मम वाञ्छितम् । मया तन्मङ्क्षु सम्प्राप्तमहो पुण्यस्य वैभवम् ! ॥ ३२ ॥ कुमार्या मिलितश्चाहं, गतयाऽपि यमालये । मयैषा जीविता चाहो, अनुकूलो विधिर्मम ॥ ३३ ॥ कुमारः स्माह किं भद्रे !, बभूवास्य महीभुजः । बभाषे साथ तस्यासीत्, कन्या मलयसुन्दरी ॥ ३४ ॥ प्रारब्धो मण्डपस्तस्या, राज्ञा नाम्ना स्वयंवरः । सर्वत्र प्रहिता दूता, आह्वातुं राजनन्दनान् ॥ ३५ ॥ अतो दिनात्तृतीयेऽह्नि, चतुर्दश्यां स्वयंवरः । राज्ञा हृष्टेन सर्वापि, सामग्री प्रगुणीकृता ॥ ३६ ॥ इतश्चास्त्यत्र तन्मातुः, सपत्नी कनकावती । तस्या मलयसुन्दर्या, द्वितीया जननीति सा ॥ ३७ ॥ तस्याः कनकवत्यास्तु, सोमाख्याऽहं महल्लिका । स्थानं सर्वरहस्यानां, सर्वकार्यविधायिका ॥ ३८ ॥ सदा कनकवत्येषा, वहन्ती द्वेषमुत्कटम् । तस्याश्छिद्राणि पश्यन्ती, कुमार्यां तस्थुषी रुषा ॥ ३९ ॥ ऊचेऽथ नरनेपथ्यधारिण्या राजकन्यया । प्रद्वेषस्य निमित्तं किं ?, गण्यते तत्र सुन्दरि !

जजाप स्तम्भनं मन्त्रं, विजयोऽपि यथाविधि । रक्षोऽपि मर्त्यगन्धेनोत्तस्थौ तल्पात्पुनः पुनः ॥ ११ ॥ यथा यथा स उत्तस्थौ, ममर्दान्यो भृशं तथा । शय्यायां सुखसम्पर्कात्, निद्रालू राक्षसोऽलुठत् ॥ १२ ॥ मन्त्रजापे ततः पूर्णे, मुक्ते पादविमर्दने । विचक्रमे नरौ हन्तुं, तावुत्थाय स राक्षसः ॥ १३ ॥ न शशाक तयोः किञ्चित्, कर्त्तुं सर्प इवादरः । सविषादः परं तस्थौ, पश्यन् तत्र स राक्षसः ॥ १४ ॥ अथोचे युवयोर्जातो, दासोऽहं मन्त्रयन्त्रितः । अत आदिशतं किं किं, कर्त्तव्यमधुना मया? ॥ १५ ॥ ततो जगाद विजयचन्द्रः पूरय मे पुरम् । भांण्डागारान् धनस्नेहरत्नकाञ्चनकोटिभिः ॥ १६ ॥ प्राकारहट्टगेहानां, शोभां कृत्वा विधेहि च । चेलोत्क्षेपसुगन्धाम्भसेकस्वरितकतोरणान् ॥ १७ ॥ तदादिष्टमिदं सर्वं, कुर्वाणे दासराक्षसे । आगाद्विजयचन्द्रेणाहूतस्तत्र पुरीजनः ॥ १८ ॥ मूलामात्यैः प्रमोदेन, राज्ये विजयचन्द्रमाः । अभिषिक्तो जनकवत्, पालयामास स प्रजाः ॥ १९ ॥ नमयामास सामन्ताननमानपि लीलया । प्रततापार्कवत्तीव्रं, जघानान्यायजं तमः ॥ १२० ॥ इत्थं राज्ये कृते स्वस्थे, गुणवर्माणमाह सः । एतत्सर्वं मया प्राप्तं, त्वत्साहाय्येन सत्तम! ॥ २१ ॥ तत्तवैवाखिलं राज्यमादत्स्वेदं यदृच्छया । कुरु प्रत्युपकाराङ्गीकारेण मुदितं तु माम् ॥ २२ ॥ अभाणि श्रेष्ठिपुत्रेण, चन्द्रावत्यां नरेश्वर! । तौ मे पितृपितृव्यौ यौ, श्रेष्ठिनौ स्तम्भितौ त्वया ॥ २३ ॥

सः ॥ ५२ ॥ पश्य सर्वत्र कोऽप्यत्र, वत्से ! तिष्ठति कुत्राचित् । इत्युक्ते कोऽपि पश्यन्त्या, मया दृष्टस्तयाऽपि न ॥५३॥ क्षणं ध्यात्वा महाकूटं, किमप्यूचेऽहमेतया । कथनीयो न कस्यापि, हारलाभस्त्वयैष तु ॥ ५४ ॥ हारं सङ्गोप्य भूपस्य, पार्श्वे साऽगान्मया सह । याचित्वैकान्तमेवञ्च, पृथ्वीपालं व्यजिज्ञपत् ॥ ५५ ॥ पृथ्वीस्थानपुरे स्वामिन् !, सूरपालो महीपतिः । महाबलः कुमारश्च, तस्य रूपकलानिधिः ॥ ५६ ॥ अत्र प्रच्छन्नमायाति, तस्यैकं मानुषं सदा । पार्श्वे मलयसुन्दर्या, वल्लभाया अतीव नः ॥ ५७ ॥ लक्ष्मीपुञ्जो महाहारः, स्वामिन् ! राज्येन यः समः । कुमार्या प्रेषितः सोऽद्य, कुमारस्यास्य हेतवे ॥ ५८ ॥ संदिष्टं च तदा तस्मै, कुमारात्र त्वया पुरे । एतव्यं बलयुक्तेन, स्वयंवरमिषाद् द्रुतम् ॥ ५९ ॥ अन्येऽपि बहवो भूपा, मिलिष्यन्ति तवात्र ते । मत्सङ्केतादिदं राज्यं, गृह्णीया उद्वहेश्च माम् ॥ २६० ॥ कुमारी सरला देव !, तेनैवं विप्रतारिता । राज्यलुब्धेन धूर्त्तेन, गर्वितेन निजौजसा ॥ ६१ ॥ तत्किमपि मृगाक्षीणां, चित्ते तुच्छधियामिह । स्वामिन् ! मधुरवाणीनां, प्रस्फुरत्यसमञ्जसम् ॥६२॥ यत्प्रभावेण भर्त्तारं, भ्रातरं पितरं तथा । पातयन्ति महानर्थजाले ता हतबुद्धयः ॥ ६३ ॥ अनर्थोऽयं मया देव !, भविष्यन् कथितस्तव । हृदये रोचते यच्च, कर्त्तव्यं तत्त्वयाऽधुना ॥ ६४ ॥ यदि न प्रत्ययोऽस्त्यत्र, विषये तव मानसे । याचस्व तं महाहारं,

न्नत्तयोर्बन्धमोक्षं त्वं, कुर्वेकं सह दुर्नयम । ततो राजा जगादैवं, कालकूटात्सुधा हहा ॥ २४ ॥ तावुभावपि तादृक्षौ, त्वं तु सर्वोपकारकृत । अहो विधेर्विचित्रेयं, सृष्टिर्दृष्टा मया स्फुटा ॥ २५ ॥ हे सत्पुरुष! वाक्यं ते, करिष्येऽहं किंयत्त्विदम् । आकर्णय त्वदायत्तं, पुनरस्तीह कारणम् ॥ २६ ॥ पुरस्यास्य समीपस्थ, एकशृङ्गाभिधे गिरौ । देव-ताधिष्ठिता त्वेका, सुगुप्ता कूपिका वरा ॥ २७ ॥ मीलदुन्मीलदस्त्यस्या, मुखं नेत्रपुटे इव । अन्यच्च सलिलग्राही, भीतश्चेन्मृत एव सः ॥ २८ ॥ स्ताम्भितस्यैव पुत्रेणानीतेनास्य जलेन चेत् । आच्छोट्यते पिता बन्धलीन् वारान् वीरकुञ्जर! ॥ २९ ॥ बन्धमोक्षो भवेत्तर्हि, नान्यथापि कथञ्चन । इत्याकर्ण्य वणिग् स्माह, करिष्यामीदमप्यहम् ॥ १३० ॥ सामग्रिकां ततः कृत्वा, गतौ द्वावपि तत्र तौ । कूपिकाया मुखे क्षिप्तो, वणिग्पुत्रो विकाशिनि ॥ ३१ ॥ निर्भयो मञ्चिकारूढो, राज्ञाऽऽकृष्य जलान्वितः । दक्षेण विकसद्वक्त्रः, कूपिकाया वहिष्कृतः ॥ ३२ ॥ गृहीत्वा तं जलं म;, तुरगीभूतराक्षसम् । आरुह्य तौ समायातौ, नगर्यामिह मन्दिरे ॥ ३३ ॥ लोभाकरोऽभिषिक्तः स्वजनको गुणव-र्मणा । त्रिरतेन सलिलेनाशु, ततः सञ्जीवभूव सः ॥३४॥ लोभनन्दी द्वितीयस्तु, तथैवास्थाद् व्यथार्दितः । पुत्रं विना यतो नैव, बन्धमोक्षः कथञ्चन ॥ ३५ ॥ गुणवर्मोपरोधेन, तुष्टेन विजयेन्दुना । गृहान्तः स्थापितः सोऽयं, द्वितीयो विरसं

स्वप्राणतोऽपि हि । सञ्जाता वैरिणी कापि, किन्तु पुत्रीमिवादियम् ॥ ७८ ॥ जीवयत्यनुरक्ता स्त्री, विरक्ता मारयत्यपि । मित्रं करोत्यमित्रं द्राग्, मित्रममित्रमीर्ष्यया ॥ ७९ ॥ ततो यावदियं दुष्टैर्न सङ्गच्छेत वैरिभिः । तावत्सुखेन हन्येत, विनष्टाङ्गुलिवत्प्रिये ! ॥ २८० ॥ गमयित्वा त्रियामां तामतिकृच्छ्रेण भूभुजा । एवं प्रभातवेलायामादिष्टो दण्डपाशिकः ॥ ८१ ॥ रेरे मम सुताऽप्येषा, पापा मलयसुन्दरी । हन्तव्याऽऽशु त्वया लात्वा, प्रष्टव्यं न पुनः पुनः ॥ ८२ ॥ ज्ञात्वा व्यतिकरं चैनं, समागत्याऽऽशु बुद्धिमान् । सुबुद्धिसचिवो रोषदुष्प्रेक्षं भूपमब्रवीत् ॥ ८३ ॥ देवेदं किं त्वयाऽऽरब्धं ?, दारुणं ह्यसमंजसम् । इदानीं किं भवत्पुत्री, न सा मलयसुन्दरी ॥ ८४ ॥ क स स्नेहो गतः किंवाऽपराद्धं कन्ययाऽनया । कार्यं सर्वमपि स्वामिन् !, कर्तुमालोच्य युज्यते ॥ ८५ ॥ विचारवर्जितं कार्यं, क्रियमाणं न सुन्दरम् । पश्चात्तापो भवेत्पश्चात्, स कोऽपि म्रियते यतः ॥ ८६ ॥ राज्ञा कनकवत्योक्तं, सर्वमाख्याय तत्त्वतः । तथा स बोधितो मन्त्री, यथा तूष्णीं भयादभूत् ॥८७॥ राजाऽऽदेशेन गत्वाऽथ, तलारक्षो जनान्वितः । कन्यासौधस्थितां कन्यामब्रवीत् मन्दवागिति ॥ ८८ ॥ आदिदेश वधं राजा, कुमारि ! कुपितस्तव । आदेशं देहि मे हन्तुं, हतकर्मा करोमि किम् ? ॥ ८९ ॥ सुदीनवदनाऽश्रान्तपतद्बाष्पजलार्द्रिता । किङ्कर्त्तव्यतया मूढा,

जजाप स्तम्भनं मन्त्रं, विजयोऽपि यथाविधि । रक्षोऽपि मर्त्यगन्धेनोत्तस्थौ तल्पात्पुनः पुनः ॥ ११ ॥ यथा यथा स उत्तस्थौ, ममर्दान्यो भृशं तथा । शय्यायां सुखसम्पर्कात्, निद्रालू राक्षसोऽलुठत् ॥ १२ ॥ मन्त्रजापे ततः पूर्णे, मुक्ते पादविमर्दने । विचक्रमे नरौ हन्तुं, तावुत्थाय स राक्षसः ॥ १३ ॥ न शशाक तयोः किञ्चित्, कर्तुं सर्प इवादरः । सविषादः परं तस्थौ, पश्यन् तत्र स राक्षसः ॥ १४ ॥ अथोचे युवयोर्जातो, दासोऽहं मन्त्रयन्त्रितः । अत आदिशतं किं किं, कर्त्तव्यमधुना मया ? ॥ १५ ॥ ततो जगाद विजयचन्द्रः पूरय मे पुरम् । भांण्डागारान् धनस्नेहरत्नकाञ्चनकोटिभिः ॥ १६ ॥ प्राकारहट्टगेहानां, शोभां कृत्वा विधेहि च । चेलोत्क्षेपसुगन्धाम्भसेकस्वस्तिकतोरणान् ॥ १७ ॥ तदादिष्टमिदं सर्वं, कुर्वाणे दासराक्षसे । आगाद्विजयचन्द्रेणाहूतस्तत्र पुरीजनः ॥ १८ ॥ मूलामात्यैः प्रमोदेन, राज्ये विजयचन्द्रमाः । अभिषिक्तो जनकवत्, पालयामास स प्रजाः ॥ १९ ॥ नमयामास सामन्ताननमानपि लीलया । प्रततापार्कवत्तीव्रं, जघानान्यायजं तमः ॥ १२० ॥ इत्थं राज्ये कृते स्वस्थे, गुणवर्माणमाह सः । एतत्सर्वं मया प्राप्तं, त्वत्साहाय्येन सत्तम ! ॥ २१ ॥ तत्त्वैवाखिलं राज्यमादत्स्वेदं यदृच्छया । कुरु प्रत्युपकाराङ्गीकारेण मुदितं तु माम् ॥ २२ ॥ अभाणि श्रेष्ठिपुत्रेण, चन्द्रावत्यां नरेश्वर ! । तौ मे पितृपितृव्यौ यौ, श्रेष्ठिनौ स्तम्भितौ त्वया ॥ २३ ॥

त्वां सा मलयसुन्दरी ॥ ३ ॥ अपराधोऽत्र युष्माकं, पादपङ्केरुहां कृतः । पुत्रीमिषेण वैरिण्या, मया यः कोऽपि पापया ॥ ४ ॥ त्वं ब्रूहि म्रियमाणायाः, मम स्यात् येन निर्वृतिः । प्रसद्य नाथ ! मे देहि, यथेच्छं मरणं तथा ॥ ५ ॥ अन्यच्चाह यदि स्वामिन् !, सङ्गच्छेऽहं तदैकशः । पित्रोः पादान्नमस्यामि, दुर्लभानधुना स्वयम् ॥६॥ नो चेदन्त्यनमस्कारो, वाच्यस्तातस्य मे त्वया । अम्बायाः कनकवतीसंयुक्तायाश्च साम्प्रतम् ॥ ७ ॥ राजा जगाद कृत्वाऽपि, कार्याण्यनुचितानि रे । पृच्छत्येषाऽपराधं तु, कुमारी मम पार्श्वतः ॥ ८ ॥ अहो गूढो ह्यभिप्रायो, योषितां कपटान्यहो । अहो मधुरवाक्यानि, परप्रत्यायनान्यहो ॥ ९ ॥ एतस्याः किं प्रणामेन ?, सुधाभाया वचोभरैः । हृदये विषतुल्यायाः, कुमार्याः कूटताजुषः ॥ ३१० ॥ ततोऽस्माकं मुखं नैव, दर्शनीयमिहानया । यथेष्टं चास्तु मरणं, तलारक्षे समीपगे ॥११ ॥ ततो वेगवती स्माह, प्रसरत्शोकसङ्कुला । दक्षिणस्यां दिशि स्वामिन् !, गोलानद्याः शुभे तटे ॥ १२ ॥ पातालमूलनामास्ति, सुगम्भीरोऽन्धकूपकः । दत्त्वा झम्पां कुमारी सा, तत्र स्वं साधयिष्यति ॥१३॥ इत्युक्त्वा सा वेगवती, रुदती बाष्पपूर्णदृग् । कथयामास वेगेन, गत्वा राजसुतापुरः ॥ १४ ॥ राजाङ्गजाऽपि कठिनं, मनः कृत्वा स्वकर्मणः । ददती दोषमालम्ब्य, साहसं धीरिमान्विता ॥ १५ ॥ ध्यायन्ती हृदये पञ्चपरमेष्ठिनमस्क्रियाम् । प्रचचालान्धकूपं तं,

क्रीडयोच्छालिता हस्तिसमीपे सेक्षुयष्टिका । निपतन्ती करग्राहं, मुखे क्षिप्ताऽऽशु दन्तिना ॥ ६ ॥ राज्ञोऽग्रे कथितं वण्ठैर्निष्काशयितुमक्षमैः । राजादिष्टा वयं तेन, गालयामः पुरीषकम् ॥ ७ ॥ कदाप्येकमुभे त्रीणि, चत्वार्यपि कदाचन । लभ्यन्ते तस्य खण्डानि, हस्तिविट् तेन गाल्यते ॥ ८ ॥ महाबलेन तन्मुद्रारत्नमादाय केशतः । प्रच्छन्नं चिक्षिपे तत्र, करिणो घासपूलके ॥ ९ ॥ तं घासपूलकं यावज्जग्रसे स मतङ्गजः । तावत्तत्र कुमारोऽपि, स्थित्वाऽचालीत्ततोऽग्रतः ॥ ४१० ॥ गच्छताऽथ कुमारेण, दृष्टो गोलानदीतटे । मिलितः प्रचुरो लोकः, कुर्वन् कोलाहलं भृशम् ॥ ११ ॥ स दध्यौ नूनमेतत्तद्यदर्थं चलितोऽस्म्यहम् । उद्गच्छन्ती चितावह्नेर्धूमलेखा यदीक्ष्यते ॥ १२ ॥ ऊर्ध्वेहस्तोऽथ वेगेन, स नैमित्तिकवेषभाग् । दधावेऽभिचिताधूमं, वदन्नेवं मुहुर्मुहुः ॥ १३ ॥ मुधा मा साहसङ्कार्षीर्भूपतेऽपत्यवत्सल ! । नूनं जीवति ते पुत्रीरत्नं मलयसुन्दरी ॥ १४ ॥ तस्येदं वचनं श्रुत्वा, कर्णयोरमृतोपमम् । मुञ्चन्नश्रूणि लोकोऽथ, दधावे तं नरं प्रति ॥ १५ ॥ लोको जगाद शीघ्रं भो!, आगच्छाऽऽगच्छ सत्वर ! । उत्तार्यतां त्रिसन्ध्यं सज्जिह्वाया लवणं तव ॥ १६ ॥ जीवन्ती विद्यते क्वापि, किं सा भूपालनन्दना ? । द्रक्ष्यसे किं कदाऽस्माकं, नेत्रैरेभिर्वदाऽऽशु भोः ! ॥ १७ ॥ ऊचे नैमित्तिकः सोऽपि, जलमानीय भो जनाः ! । विध्यापयत वेगेन,

रसन् ॥ ३६ ॥ मुद्रादेशादिदानाय, नृपेणामन्त्रितोऽपि सः । किञ्चनापि न जग्राह, गुणवर्मात्र तस्थिवान् ॥३७॥ सत्कृत्यानेकधा राजा, रसतुम्बं समर्प्य तत् । पुनः स्वदेशयानाय, विसृष्टो गुणवर्मणा ॥३८॥ अर्प्पयित्वा तु तस्यैव, तत्तुम्बं गुणवर्मणः । संसर्गं तस्य नो त्यक्तुं, शक्तोऽपि क्षितिपो ययौ ॥ ३९ ॥ अद्यायं निजवृत्तान्तो, निश्चयेत्य गुणवर्मणा । कथितो देवि ! मे सर्वं, उपायनपुरस्सरम् ॥१४०॥ न्यासापहारसम्भूतं, दोषं पितृपितृव्ययोः । बहुधा क्षमितश्चाहं, गुणिना गुणवर्मणा ॥ ४१ ॥ प्रिये ! सूरतनूजेन, गतं राज्यमुपार्जितम् । वालितञ्च निजं वैरं, तेन तद्विजयेन्दुना ॥ ४२ ॥ द्विः स्वीकृत्यापि मरणं, सुतेन गुणवर्मणा । आपदाम्भोधिपतितः, पिता पश्य समुध्धृतः ॥ ४३ ॥ ततो देवि! कृतार्थास्ते, येषां पुत्रा अहं पुनः । अनपत्यो हतात्मेति, चिन्तायाः कारणं मम ॥ ४४ ॥ को वन्दते गुरून् देवान्, धर्मस्थानानि कः पुमान् । उध्धरिष्यति कः पश्चात्, कः कुलं धारयिष्यति ? ॥ ४५ ॥ मत्तो धारालपर्शोस्तु, वंशोऽयं मूलकर्त्तनम् । लप्स्यते तेन चित्ते मे, चिन्तावह्निर्ज्वलत्यलम् ॥ ४६ ॥ ऊचे चम्पकमालाऽथ, भर्त्तुर्दुःखेन दुःखिता । देवेदं दुस्सहं दुःखं, समानं ते ममापि हि ॥ ४७ ॥ केषाञ्चित्सदपत्यानि, धन्यानामङ्कसैकते । क्रीडन्ति मुग्धवाक्यानि, प्रस्खलच्चरणानि च ॥ ४८ ॥ गेहं तदेव गेहन्तु, रणद्घुर्घुरकाङ्घ्रयः । द्वित्राः स्फुरच्छिखाः पुत्रा, यत्र

अत्रार्थे यदि ते चेतः, सन्दिग्धं क्षितिवासव ! । ज्ञानदृष्ट्योपलब्धांस्तत्, शृण्वेतान् प्रत्ययानिह ॥ ३१ ॥ नामाङ्कितं कुमार्याश्चेन्, मुद्रारत्नं कुतोऽपि ते । आगच्छति करे कल्ये, सत्यं तन्मम भाषितम् ॥ ३२ ॥ तथा चतुर्दशीघस्ने, प्रत्यूषे नगराद् बहिः । पूर्वप्रतोलिकापार्श्वे, परीक्षार्थं महीभुजाम् ॥ ३३ ॥ षड्हस्तप्रमितं स्तम्भं, स्थूलं वर्णकचित्रितम् । कुतोऽप्यानीय मोक्ष्यन्ते, तव गोत्राधिदेवता ॥ ३४ ॥ स च देवस्त्वया स्थाप्यः, स्वयंवरणमण्डपे । वज्रसाराभिधं यच्च, कोदण्डं तेऽस्ति वेश्मनि ॥ ३५ ॥ पूर्वजानां च तच्चापं, कृत्वा नाराचसंयुतम् । पूजयित्वा महाभक्त्या, स्थाप्यं स्तम्भस्य सन्निधौ ॥३६॥ तत्कोदण्डं समारोप्य, नाराचेन नरोऽत्र यः । स्तम्भं भेत्स्यति स ज्ञेयः, कन्यायास्ते वरो ननु ॥३७॥ स्तम्भस्यास्ति पुनस्तस्य, विशिष्टः पूजनक्रमः । निमित्तेन मया ज्ञातमिदं सर्वमपि प्रभो ! ॥ ३८ ॥ इमानि यदि चिह्नानि, न मिलन्ति सुताऽपि न । ततस्तिष्ठन्ति काष्ठानि, स्वायत्तान्यग्निना समम् ॥३९॥ तस्यैवं वचनं श्रुत्वा, जनः सर्वः प्रमोदभाग् । निमित्तज्ञनरस्येति, चक्रे संस्तवनं तदा ॥ ४४० ॥ पुण्यैरस्माकमत्र त्वं, समायातोऽसि सज्जर ! । जगतः सकलस्याप्युपकारोऽद्य त्वया कृतः ॥ ४१ ॥ फणीन्द्रकूर्मराजाभ्यां, वाङ्मात्रेण धृता मही । नूनं सत्पुरुषैर्युष्मादृक्षैः सत्पुरुषैर्धृता ॥ ४२ ॥ अहो सज्ज्ञानलक्ष्मीस्ते, परोपकृतिबन्धुरा । तत्त्वं नन्द चिरं जीव, निस्सीम-

क्रीडन्ति लीलया ॥ ४९ ॥ तेनैव कृतकृत्यं स्वं, नरजन्म विनिर्मितम् । येनोत्तमरुचिः पुत्रः, कुलदीपोऽत्र बोधितः ॥ १५० ॥ पुत्रादिसन्ततिर्देव !, पुण्यपुञ्जेन लभ्यते । पुण्योपचयहेतोस्तद्, यतितव्यमिहाधुना ॥ ५१ ॥ सामर्थ्येन न चार्थेन, यत्कार्यं नैव सिध्यति । स्वामिन् ! विवेकिनां तत्र, न युक्ता परिदेवना ॥५२॥ ततः प्रसीद नाथ ! त्वं, चिन्ता-दुःखं हृदस्त्यज । चिन्तादुःखार्त्तिसन्तप्तो, विनश्यति यतो नरः ॥ ५३ ॥ सत्यवादी यदि कापि, कोऽपि देवः कथञ्चन । नरेन्द्राराध्यते द्वाभ्यामावाभ्यां पुत्रहेतवे ॥ ५४ ॥ ततस्तुष्टः सुतं दत्ते, पूरयत्यात्मवाञ्छितम् । देवं विना पुनः शक्तिः, कार्येऽस्तीदृशि कस्य वै? ॥५५॥ हृष्टो राजा जगादाथ, साध्वी बुद्धिः प्रिये ! तव । उपायः साधुरास्तस्तदेवं भवतु सुन्दरि ! ॥ ५६ ॥ सुमुहूर्त्ते दिने देवं, विधिना सत्यवादिनम् । आवामाराधयिष्यावः, सत्पुत्रोत्पत्तिहेतवे ॥ ५७ ॥ देवी स्माऽऽह पुनर्दीनमुखी देव ! वचः शृणु । न जानेऽहं परं नेत्रं, दक्षिणं मे स्फुरत्यदः ॥ ५८ ॥ निमित्तेनामुना नूनं, कोऽपि भूतग्रहो मम । विद्युत्पातोऽथवा किंवा, सर्वस्वापहृतिः क्षणात ॥ ५९ ॥ रोगातङ्कोऽथवा कोऽपि, किंवाऽऽपत् प्राणसंशाया । भविष्यति ततः कापि, सम्पद्यते न मे रतिः ॥ १६० ॥ युग्मम् ॥ राजा जगाद मा भीस्त्वं, मा कार्षी-रधृतिं हृदि । आशङ्किष्ठा विरूपं मा, स्फुरत्यङ्गमिदं यदि ॥ ६१ ॥ तथापि पालयत्यत्र, मयि राज्यं कुतस्तव । भीरा-

स्तथाशिषः । ददानो दानमर्थिभ्यो, भूपालः प्राप मन्दिरम् ॥ ५६ ॥ प्रथमं ज्ञानिना तेन, कारयित्वा ततः स्वयम् । स्नानाशनादिकं चक्रे, भूपतिः सकलां क्रियाम् ॥ ५७ ॥ तेनैव सह राज्ञाऽथ, कुर्वता संकथादिकम् । दिनार्धं गमितं किञ्चित्, शयानेन निशाऽपि च ॥ ५८ ॥ समादिष्टा नराः कुम्भिविष्ठागालनकर्मणि । प्रातरागत्य सर्वेऽपि, भूपमेवं व्यजिज्ञपन् ॥ ५९ ॥ न जानीमो वयं किञ्चिदस्माभिः कुम्भिनो मलम् । गालयद्भिरिदं लब्धं, मुद्रारत्नं प्रभोऽधुना ॥ ४६० ॥ तैरित्युक्त्वाऽर्पिते हस्ते, मुद्रारत्ने नरेश्वरः । सुतानामाङ्कितं दृष्ट्वा, तच्छिरोऽकम्पयन् मुहुः ॥ ६१ ॥ पश्यत्यभिमुखं राज्ञि, ज्ञानिना जगदे वचः । ज्ञानदृष्टं कदाप्येतन्नान्यथा भवति प्रभो! ॥६२॥ राजा जगाद दुःखार्त्तः, कुमारीपार्श्वतः कथम् ? । मत्तेभस्यास्य जठरे, गतमेतन्नरोत्तम ! ॥ ६३ ॥ ज्ञानी जगाद नो सत्यं, ज्ञायते देव! किञ्चन ! । प्रभावः कुलदेवीनां, किन्तु सम्भाव्यतेऽप्ययम् ॥ ६४ ॥ प्रत्यये मिलिते तस्मिन्, राजा हर्षवशंवदः । विशेषात् कारयामास, कन्याविवाहसज्जताम् ॥ ६५ ॥ विशालः कारितो राज्ञा, स्वयंवरणमण्डपः । आवासा भूभुजां योग्याः, सर्वेऽपि प्रगुणीकृताः ॥ ६६ ॥ जनोऽवोचदहो चित्रं, वीक्षध्वं कन्यकां विना । देवेनात्र समारेभे, यद्विवाहमहोत्सवः ॥ ६७ ॥ न भविष्यति चेत्कन्यालाभस्तत्किं गदिष्यति ? । आयातानामयं राज्ञां, लाघवं

ङ्काप्युदिते सूर्ये, तमोलेशोऽपि न प्रिये! ॥६२॥ युग्मम्॥ कथञ्चिद्यदि किञ्चित्ते, भाविष्यत्यशुभं प्रिये! । त्वया सह ममाप्यग्निः, शरणं द्राक् पतङ्गवत् ॥६३॥ इति संस्थाप्य देवीं तां, भयभ्रान्तविलोचनाम् । सिंहासनोपविष्टः सन्, राजा कार्यरतोऽभवत् ॥ ६४ ॥ यथा यथाऽस्फुरन् नेत्रं, दक्षिणं सा तथा तथा । सौधे वने पुरे बाह्ये, देवी नापद्रतिं क्वचित् ॥ ६५॥ मध्याह्ने यावदागत्य, पल्यङ्के क्षणमस्वपीत् । किञ्चित् किञ्चित्तदा निद्रासुखं सेवितुमादृता ॥ ६६ ॥ इतश्च तस्यां वेलायां, ताडयन्ती शिरः करैः । चेटी वेगवती नाम्नी, सम्प्राप्ता राजसन्निधौ ॥ ६७ ॥ सा जगादाश्रुधाराभिः, क्षालयन्ती निजं मुखम् । देव्याश्चरूपकमालाया, देव ! जानामि नापि किम् ॥ ६८ ॥ इत्यर्द्धकथिते राजा, श्रुत्वा देव्याः किमप्यदः । दृष्ट्वा चेटीं च शोकार्त्तां, जगाद चकितो हृदि ॥ ६९ ॥ हा देवि ! दैववशातस्तवागात्किममङ्गलम् ? । सञ्जातं सफलं किन्तु, स्फुरितं दक्षिणेक्षणम् ? ॥ १७० ॥ हञ्जे वेगवति ! ब्रूहि, विलम्बं सहते न हृत् । देव्याश्चरूपकमालाया, बभूव किमु साम्प्रतम् ? ॥ ७१ ॥ रुदती वेगवत्याह, धीरवीरशिरोमणे ! । द्वौ कर्णौ हृदयं चापि, कुर्यास्त्वं वज्रकर्कशम् ॥७२॥ दारयन्ती सतां हृन्दि, स्निग्धानि मधुराणि च। अतुच्छाऽऽगच्छति स्वेच्छा, वज्राशनिरियं प्रभो ! ॥ ७३ ॥ ईक्षणे दक्षिणे स्वामिन्!, प्रस्फुरत्यधिकाधिकम् । सौधे वने पुरे बाह्ये, लेभे देवी न शं क्वचित् ॥ ७४ ॥

व्यायन्नृपस्तस्थौ, यावत्स्वस्थमतिस्तदा ॥ ८१ ॥ स्तम्भस्य शुध्दये तावत्, प्रेषितो योऽभवत् पुमान् । समागत्य स भूपालं, दत्तकर्णं व्यजिज्ञपत् ॥ ८२ ॥ युष्मदादेशतो गत्वा, देव ! गोपुरतो बहिः । यावदीक्षां बभूवाहं, तत्समीपमितस्ततः ॥ ८३ ॥ प्रतोलीवामतस्तावत्, दृष्टः प्राकारकोणके । विचित्रचित्रसंयुक्तः, स्तम्भ एको मया महान् ॥ ८४ ॥ श्रुत्वेति ज्ञानिनं शंसन्, सहैवादाय तं नरम् । ययौ तत्र महीपालः, स स्तम्भो यत्र विद्यते ॥ ८५ ॥ यावन्नृपोऽपि लोकोऽपि, तं स्तम्भं पूजयिष्यति ॥ ८६ ॥ तावन्नैमित्तिकेचित्रीयमाणचित्तोऽथ, विस्फारितविलोचनः । नोचे, स्तम्भेऽस्मिन् केनचिन्नहि । लगनीयः करो येन, कुप्यन्ति कुलदेवताः ॥ ८७ ॥ आनाय्य ज्ञानिना सर्वं, ततः पुष्पादिकं स्वयम् । पूजाविधिः समारेभे, स्तम्भस्यानेकभङ्गिभिः ॥ ८८ ॥ उपविश्य पुरस्तस्य, कृत्वा पद्मासनं च सः । ध्यानस्थ इव वक्रेण, चक्रे ह्रींकारभाषणम् ॥ ८९ ॥ कारिते प्रेक्षणे तत्र, मिलिते च पुरीजने । सार्द्धयामे गतेऽथाह्न, आदिष्टास्तेन ये नराः ॥ ४९० ॥ शुचीभूताः दृढस्कन्धाः, पुष्पमालालिमालिताः । उत्पाट्य तं महास्तम्भं, प्रचेलुर्नगरीं प्राति ॥९१॥ युग्मम् । नरेन्द्रे सह लोकेन, पादचारेण गच्छति । नाटके क्रियमाणे च, बन्दिवृन्दे पठत्यपि॥९२॥नागरैः क्रियमाणेषु, मङ्गलेषु पदे पदे । महेन महता निन्ये, स तैः स्तम्भः स्वयंवरम् ॥९३॥ युग्मम् ।

मध्यंदिने समागत्य, शय्यायां सुप्तया तया । अपरिच्छदया देव्या, पत्रार्थं प्रेपिताप्यहम् ॥७५॥ पत्राण्यादाय तत्पार्श्वे, प्राप्ता यावदहं पुनः । तावत्काष्ठमिवाचेष्टा, देवी सा ददृशे मया ॥ ७६ ॥ न जानेऽहं परं किञ्चिद्देव्याः प्राणाः कथं गताः ? । किं रोगेण विषेणाथ, किं दुःखेनात्महत्यया ? ॥ ७७ ॥ इदं दम्भोलिपाताभं, हालाहलसमं वचः । शृण्वन्न-तुच्छमूर्च्छोऽगात्, भूपीठं भूमिवल्लभः ॥ ७८ ॥ वीजितः शीतलैर्वातैः, स सिक्तश्चन्दनद्रवैः । गतमूर्च्छः समुत्तस्थौ, भूपतिर्विलपन्निति ॥ ७९ ॥ रे रे निकृष्टदैवाहं, प्रथमं किं न मारितः ? । देव्यमङ्गलवृत्तान्तं, नाश्रोष्यं येन किञ्चन ॥१८०॥ अरे दैव ! त्वयाऽऽत्मा मेऽर्द्धच्छिन्नो विहितः कथम् ? । पश्चार्धमपि तं छिन्धि, पल्लीपुच्छमिवास्फुरत् ॥ ८१ ॥ हा दिव्यावगमे देवि !, दक्षे ! दक्षिणचक्षुषः । स्फुरणेन त्वयाऽऽख्यायि, मृत्युर्नो रक्षितो मया ॥ ८२ ॥ अज्ञानोऽहं महापापो, बुद्धिलेशोऽपि नास्ति मे । एवमेव स्थिता यस्मात्, ज्ञात्वाऽपि विपदं तव ॥ ८३ ॥ स्वं निन्दन्निति सिञ्चंश्च, भूपीठं नेत्रवारिभिः । राजा परिजनं सर्वं, दुःखयामास तं तदा ॥ ८४ ॥ पपात पुनरुत्तस्थौ, क्षणं तस्थौ क्षणं ययौ । शून्यमालोकयामास, विललाप नृपः क्षणात्(क्षणम्) ॥८५॥ सम्भूय सचिवाः सर्वे, दुःखभारेण भङ्गुराः । नृपं विज्ञपयामासुर्भृशं गद्गदया गिरा ॥ ८६ ॥ शीघ्रं चलत हे स्वामिन् !, गत्वा तत्र विलोक्यते । देव्याश्चम्पकमा-

कुमारि ! त्वमिहास्माकं, मिलिता स्मरतामिति । द्रक्ष्यामो नयनैरेभिः, किं कदापि कुमारिकाम् ? ॥३२॥ ऊचे चम्पकमा-
लाऽथ, जाताऽहं वैरिणीव ते । त्वया वत्से ! कथं सोढं, दुःखं तत्तादृशं पुनः ? ॥३३॥ राजा जगाद वत्से ! त्वं, निप-
तन्त्यन्धकूपके । धृतास्मत्कुलदेवीभिः, स्थापिता चात्मसन्निधौ ॥ ३४ ॥ मा भूदस्याः कुमार्यास्तु, योऽपि सोऽपि वरः
किल । इति राजकुमाराणां, सत्त्वस्य कषहेतवे ॥३५॥ मध्येस्तम्भं कुमारि ! त्वां, क्षिप्त्वा शृङ्गारबन्धुराम् । वरमा-
लाकरां चारुचन्दनादिभिरर्चिताम् ॥ ३६ ॥ अपहृतेन कनकवतीपार्श्वाद्बलादपि । लक्ष्मीपुञ्जाख्यहारेण, कण्ठक्षिप्तेन
भूषिताम् ॥ ३७ ॥ एताभिरेव ह्यस्माकमेष स्तम्भः समर्पितः । अधुना कुलदेवीभिः, पाणिग्रहणपर्वणि ॥ ३८ ॥ चतुर्भिः
कुलकम् । राजाऽऽख्यत् ज्ञानिनो ज्ञातं, सर्वमस्तीति सम्प्रति । स्वप्नेऽप्यागत्य किमपि, नोक्तं ताभिरिति ध्रुवम् ॥ ३९ ॥
अहो समीहितं सर्वं, सिद्धं सम्प्रति मामकम् । सा च दूरे गता चिन्ता, भाग्यमुद्घटितं पुनः ॥५४०॥ खाट्करोति महा-
मात्यास्तदेकं हृदये मम । यत्तेन ज्ञानिनाऽऽदिष्टो, वरः पुत्र्या महाबलः ॥ ४१ ॥ यद्यथा कथितं तेन, तत्सर्वं मिलितं
तथा । एतदेवान्यथा जातं, यत्कुमार्या वरो न सः ॥४२॥ यदेषोऽत्र महास्तम्भो, वेणिकेन महौजसा । अनेन दारितो
नूनं, कुमार्या वर एष तत् ॥४३॥ शृण्वन्निति नरेन्द्रस्य, वाक्यान्येष महाबलः । कृतकृत्योऽहसच्चित्ते, वस्त्रेण पिहि-

लायाः, काऽवस्था कीदृशी पुनः? ॥ ८७ ॥ न ज्ञायते कदाप्येषा, नाभिसंस्थितजीविता । हालाहलानुभावेन, गतश्वासाऽपि जायते ॥८८॥ इत्युक्तो मन्त्रिभी राजा, प्रस्खलच्चरणाम्बुजः । परीवारपरीतोऽगाद्देव्यावासनिकेतनम् ॥ ८९ ॥ ददर्शासौ प्रियां तत्र, निश्चेष्टां काष्ठवन्नृपः । अब्रुवाणामकुर्वाणां, सर्वथा वपुषः क्रियाम् ॥ १९० ॥ पपात सहसाऽतुच्छमूर्छाच्छादितचेतनः । भूपो भूमितले भ्रान्तनयनः स्नेहवत्सलः ॥ ९१ ॥ उन्मीलिताक्षियुगलः, सिक्तः शीतलवारिणा । उत्तस्थौ तदवस्थां तां, देवीं दृष्ट्वा मुमूर्च्छ च ॥ ९२ ॥ मूर्च्छातः पुनरुत्तस्थौ, मुमूर्छ पुनरेव हि । उत्तस्थौ च पुनर्यावत्, राजाऽवस्थामिमां श्रितः ॥ ९३ ॥ सचिवास्तावदैक्षन्त, देव्यास्तत्सकलं वपुः । किन्तु क्वापि न तेऽपश्यन्, दंष्ट्राघातव्रणादिकम् ॥ ९४ ॥ अन्योऽन्यं मन्त्रयामासुः, सर्वे सम्भूय ते रहः । अक्षताङ्गी महादेवी, किन्तु प्राणा गता ननु ॥ ९५ ॥ तत्किं हृदयदुःखेन, किंवा देवेन वैरिणा । देव्याः प्राणा हृता अङ्गमन्यथा कथमक्षतम् ? ॥ ९६ ॥ मरिष्यति नृपो नूनं, देवीस्नेहेन मोहितः । राज्यभ्रंशस्ततो भावी, नास्ति राज्यधरो यतः ॥९७ ॥ ऊचे सुबुद्धिनामाद्यः, क्रियते काललङ्घनम् । येन कालविलम्बेन, कोऽप्युपायः स्फुरेत्पुनः ॥ ९८ ॥ अन्यो मन्त्री जगादाथ, कालक्षेपः कथं पुनः ? । सुबुद्धिः स्माह राज्ञोऽसौ, कथ्यते विषविक्रिया ॥ ९९ ॥ जीवत्यद्यापि देवीयं, नाभिपद्मस्थितासुका ।

सूरपालनरेशितुः । महाबलो महावीर्यश्चिरं जयति भूतले ॥ ५७ ॥ चिन्तितं तेन भूपेन, स्वयंवरविधायिना । अहो ! किं श्रूयते कर्णसुधासारोपमं वचः ? ॥५८॥ ऊचे च ब्रूहि रे सम्यग्, कुमारः कोऽयमीदृशः? । सोऽवोचद्देव ! सन्देहो, न कोऽप्यत्र मनागपि ॥ ५९ ॥ प्रसादैरहमेतस्य, वृद्धिमेतावतीं गतः । अपि दृष्टं न किं वेत्सि, कुमारं तं महाबलम् ॥ ५६० ॥ उवाच भूपतिर्वृष्टिरनभ्राऽभूदहो इयम् । अकस्मादेव तज्जातमगम्यं मनसाऽपि यत् ॥ ६१ ॥ अहो अ-वितथं जातं, कथितं तस्य चाधुना । प्रचलेन्मेरुचूलाऽपि, न पुनर्ज्ञानिनो वचः ॥ ६२ ॥ तत्किं तारापथात्किंवा, दिक्चक्रात् किं रसातलात् ? । कुमारोऽयं समायातः, सम्यग् न ज्ञायतेऽपि किम् ? ॥ ६३ ॥ अस्तु तावदियं चिन्ता, साम्प्रतं ज्ञास्यते यतः । पश्चादपि कुमारस्य, मुखेनैवाखिलं ह्यदः ॥ ६४ ॥ करोम्यहं विनश्यन्ति, कार्याण्यन्यानि साम्प्रतम् । ध्यात्वेति ते नृपास्तेन, बोधयित्वा प्रसादिताः ॥ ६५ ॥ कुमारं जेमयामास, कुमारीं स्वजनानपि । भोजनं प्रेषयामास, राजाऽन्येषां च भूभुजाम् ॥ ६६ ॥ विलोकितेऽपि सर्वत्र, न लब्धे ज्ञानिपूरुषे । दध्यौ भूपो गतो नूनं, निरीहः सोऽन्यकार्यकृत् ॥ ६७ ॥ बुभुजे भूपतिः पश्चात्सार्धं चम्पकमालया । सामग्रीं कारयामास, लग्नेऽथाऽऽसन्नसंस्थिते ॥ ६८ ॥ पूजयामास भूपालो, विधिवत्कुलदेवताः । बन्धुवृद्धगुरूंश्चापि, वस्त्रताम्बूलभो-

क्रियते विषनाशोऽस्या, मणिमन्त्रौषधादिभिः ॥२००॥ मन्त्रयित्वेति ते सर्वे, स्तुवन्तो मतिवैभवम् । सर्वमावेदयामासु-र्भूपालस्यैत्य तत्तथा ॥ १ ॥ ततोऽमृतच्छटासिक्त, इव सर्वाङ्गमुच्छ्वसन् । इति स्माह प्रजापालो, विकस्वरविलोचनः ॥ २ ॥ भो भो धावत सर्वेऽपि, शीघ्रमानयतौषधम् । विषहन्तॄन् मणींश्चापि, निमन्त्रयत मान्त्रिकान् ॥ ३ ॥ राजाऽऽदेशेन मिलिता, सामग्री सकला ततः । सुबुद्धिशिक्षितैर्मङ्क्षु, प्रारेभे मान्त्रिकैः क्रिया ॥ ४ ॥ स्थापयित्वा रहो देवीं, मन्त्रिणो मान्त्रिकैस्तथा । चिकित्सां कारयामासुर्यथा राज्ञेति चिन्तितम् ॥ ५ ॥ उत्थास्यत्यधुना देवी, दृष्टिमुन्मीलयिष्यति । इदानीं वक्ष्यति श्वासो, वलिष्यत्यधुना पुनः ॥ ६॥ इति ध्यायति भूपाले, दिनार्द्धं तन्निशापि सा । कथं कथञ्चित् कष्टेन, धीसखैरतिवाहिता ॥७॥ प्रभाते सचिवाः सर्वे, निरुपाया जगुर्मिथः । निषेत्स्यतेऽधुना भूमानस्माभिर्मरणात्कथम् ? ॥ ८ ॥ देवीस्नेहनिबद्धोऽयं, मरिष्यति नरेश्वरः । स्नेहस्याकृत्रिमस्यास्ति, न काप्यन्या गतिर्यतः ॥ ९ ॥ राज्यं राष्ट्रञ्च कोशश्च, चतुरङ्गचमूरपि । वयं लोकाश्च निर्नाथा, भविष्यामः कथं हहा ! ॥ २१० ॥ इति चिन्ताब्धिनिर्मग्नास्तस्थुः सर्वेऽपि मन्त्रिणः । कांदिशीकाः समं शाखाभ्रष्टाः शाखामृगा इव ॥ ११ ॥ दृष्ट्वा राजापि निश्चेष्टां, पूर्ववन्निजवल्लभाम् । रुद्धकण्ठोऽतिदुःखेन, विललाप सगद्गदम् ॥ १२ ॥ एते सर्वेऽपि सञ्जाता, उपाया-

उज्ज्वलनेपथ्यधरो, वरोऽभाद्वल्लभान्वितः । सुखलक्ष्म्याऽन्वितो मूर्त्त, इव पुण्यमहोत्करः ॥ ८३ ॥ आशासितावुभावेवं, पितृभ्यां तौ तु दम्पती । संयोगो युवयोरस्तु, ज्योत्स्नाचन्द्रमसोरिव ॥ ८४ ॥ प्रभूतं नरनाथेन, कुमाराय प्रकल्पितम् । निजलक्ष्म्यनुमानेन, गजवाजिरथादिकम् ॥ ८५ ॥ ततस्ताभ्यां प्रहृष्टाभ्यामाश्रिते वासवेश्मनि । तदैव भूपतिर्गत्वा, पप्रच्छेति महाबलम् ॥८६॥ कुमार ! त्वं पुरात्स्वीयादेकाकी कथमागतः ? । अतर्कितोऽत्र पुण्यैर्नः, कार्यस्यैव क्षणे वद ॥८७॥ पूर्वप्रपञ्चितं स्वीयकूटस्य सदृशं वचः । कुमारः श्लिष्टमाचख्यौ, दृष्ट्या संज्ञापयन् प्रियाम् ॥८८॥ उत्पाट्याहं महाराज !, देव्यानीतोऽत्र रंहसा । राजाऽह घटते सर्वं, यत्कृतं कुलदैवतैः ॥ ८९ ॥ कुमारः स्माह मे नूनं, पितरौ विरहासहौ । अस्थातामतिदुःखेन, पश्यन्तौ मामितस्ततः ॥ ५९० ॥ यदि द्वादशयामान्तर्लप्स्येते नैव मामिमौ । मरिष्यतस्तदा नूनमतिस्नेहलमानसौ ॥ ९१ ॥ ततः प्रसादमाधाय, देव ! मां विसृजाधुना । मह्यं मम पितृभ्यां च, देहि त्वं ननु जीवितम् ॥ ९२ ॥ प्रातिपद्दिवसे सूर्येऽनुद्गतेऽहं गतो यदि । पृथ्वीस्थानपुरं तन्मे, पितृभ्यामस्ति सङ्गमः ॥ ९३ ॥ इति श्रुत्वा नृपेणोचे, न कुमाराधृतिस्त्वया । कर्त्तव्या क्वापि यच्चिन्ता, सर्वैषा वर्त्तते मम ॥ ९४ ॥ द्वाषष्टियोजनानीतः, पृथ्वीस्थानपुरं हि तत् । रजन्याः प्रथमं यामं, तिष्ठ त्वं तावदत्र भोः ! ॥ ९५ ॥ यावदानाय्य

निष्फलास्त्वयि । केनोपायेन हा देवि !, नीरोगा त्वं भविष्यसि? ॥ १३ ॥ अप्येतैरुपचारैस्त्वं, कालेनैतावतापि चेत् । न ब्रूषे तद्गता नूनं, मुक्त्वा मामिह वल्लभम् ॥ १४ ॥ दिवसेन समा यस्य, त्वां विना घटिकापि मे । दिवसो मासवत्सोऽहं, भविष्यामि प्रिये ! कथम् ? ॥१५॥ धिङ् मे राज्यमिदं सर्वं, धिक् सत्त्वं धिक्सुकौशलम् । यदेषा रक्षिता नैव, तवापत् विदिताऽपि हि ॥ १६ ॥ त्यक्त्वा मां क गता देवि !, ममैतत्कथयैकशः । येन तत्रैत्य ते वीक्ष्य, मुखं तृप्तो भवाम्यहम् ॥ १७ ॥ जल्पन्निति नृपो मूर्च्छामतुच्छां प्राप दुःखितः । शीतोपचारैरुत्तस्थावुवाचैवं च मन्त्रिणः ॥ १८ ॥ अहो मन्त्रीश्वरा ! यूयं, शृणुतैकं वचो मम । युष्माभिर्जीविता नैव, देवी तावत्कथञ्चन ॥१९॥ तन्नूनमिह मर्त्तव्यं, समं देव्या मयाऽधुना । प्राणा ममोड्डयिष्यन्ते, यदस्या विरहे स्वयम् ॥ २० ॥ चितां कारयताह्नाय, काष्ठैर्गोलानदीतटे । देवीवियोगदग्धोऽहं, यद्भवास्यत्र निर्वृतः ॥ २१ ॥ आहुः स्म मन्त्रिणो नेत्रजलक्लिन्नमहीतलाः । हा हा हा देव ! सहसा, वयं याता रसातलम् ! ॥ २२ ॥ अस्तङ्गते यथा सूर्ये, भवन्ति कमलाकराः । पित्रोश्च मरणे बाला, मत्स्या वा सलिलं विना ॥ २३ ॥ विना युष्मांस्तथा देव !, वयं पुण्यविवर्जिताः । दीना रुलन्तो भूपीठे, भविष्यामः कथं कथम् ? ॥ २४ ॥ तत्प्रसीद विमुञ्चामुं, मोहमाधेहि धीरताम् । परिणाममम मुं मुक्त्वा, स्वामिन् ! राज्यं

प्रयोगतः ॥ ८ ॥ इतश्च तस्कराः केऽपि, मञ्जूषामुपभित्तिकम् । रक्षितामेकचौरेण, मुक्त्वाऽगुर्नगरं प्रति ॥ ९ ॥ क्वापि सङ्गोप्य वर्णादि, सर्वं तस्करसंज्ञया । आलपंस्तस्य चौरस्य, समीपं गतवानहम् ॥ ६१० ॥ ततोऽहं तेन चौरेण, लोलुपेनेति याचितः । तालं भङ्क्तुमलं नाहं, तत्त्वमुद्घाट्य देहि मे ॥ ११ ॥ मया तथा कृते तेन, मञ्जूषासंस्थितं वरम् । बद्ध्वा पोट्टलके वस्तु, हीनसत्त्वेन जल्पितम् ॥ १२ ॥ यदि यास्याम्यहं चौरास्तेऽन्ये वा राजपौरुषाः । आगत्यानुपदं शीघ्रं, मां हनिष्यन्ति निश्चितम् ॥ १३ ॥ कथं करोमि? तद्वीर ! सुधियं मे समादिश । कारुण्येन मया तस्य, रक्षोपायोऽथ चिन्तितः ॥१४॥ पद्मशिलां मयोद्घाट्य, तत्र भट्टारिकागृहे । निक्षिप्तः शिखरे चौरः, स लोप्त्रेण समन्वितः ॥१५॥ तथैव तां शिलां मुक्त्वा, स्थितं देवीगृहाङ्गणे । वटवृक्षं समारुह्य, यावत्सावहितः स्थितः ॥ १६ ॥ सर्वं तावन् मया दृष्टं, तवागमनमिच्छता । मध्येवटकोटरं स्वं, वस्त्रालङ्करणादिकम् ॥ १७ ॥ तया देवतया मत्तो, हृत्वैतानीह कोटरे । मुक्तानीति मया ज्ञात्वा, गृहीतान्यखिलान्यपि ॥ १८ ॥ इतस्त्वामागतां वीक्ष्य, तत्रोन्मार्गेण मन्दिरे । उत्तीर्याहं वटस्कन्धात्, मिलितोऽस्मि त्वया सह ॥ १९ ॥ इत्याख्यातं मया कान्ते!, तवाग्रे चरितं निजम् । त्वमप्याख्याहि मे मूलादात्मीयं विहितं तदा ॥ ६२० ॥ सा जगाद ततः

श्रूयतां पुरः ॥ ३३ ॥ मार्गश्रमादहं खिन्ना, सुप्ता तत्रैव वेश्मनि । तौ द्वावपि समायातौ, तृतीये प्रहरे पुनः ॥ ३४ ॥ उत्थापिताऽहमात्मीयदास्या मगधया ततः । छन्नो देवकुलस्यान्तः, पिहितो मोचितो घटः ॥ ३५ ॥ तावुभौ वादिना-वुक्तौ, विधाय साक्षिणो मया । भनज्मि युवयोर्वादं, दत्त्वा किञ्चन साम्प्रतम् ॥ ३६ ॥ प्रतिपन्ने ततस्तेन, कथं दास्यति किञ्चन । इत्येवं विस्मिते लोके, मगधा संज्ञिता मया ॥ ३७ ॥ ततो मगधयाऽवादि, प्रतिवादी सुरौकसः । मध्येऽस्ति किञ्चन घटे, स्वयं गत्वा गृहाण तत् ॥ ३८ ॥ मध्ये गत्वाऽथ यावत्स, उद्घाट्य च पिधानकम् । चिक्षेपाशु घटे हस्तं, तावल्लग्नोऽहिरुच्छ्वसन् ॥ ३९ ॥ तेनाऽऽशु कर्षता हस्तं, जगदेऽस्तीह किञ्चन । ततो मगधयाऽभाणि, हसन्त्या हर्षयुक्तया ॥६४०॥ मयाऽऽसीन्मानितं यत्ते, तदिदं त्वं गृहाण भोः !। मम तेऽपि न सम्बन्धः, तत्र मुक्ताऽस्मि दुर्ग्रहात् ॥ ४१ ॥ हसन्तोऽथ जनाः प्रोचुः, सर्वे तत्रेत्यहो मतिः । एतस्य त्यजतः सर्वं, दत्तं सुष्ठ्विति किञ्चन॥४२॥ सर्पदष्टो महाधूर्त्तः, स नीतस्तोतलामठम् । अहं तु स्वगृहं नीता, तया मगधयाऽऽग्रहात् ॥ ४३ ॥ प्रविश्यन्त्या मया गेहं, भणितं न विशाम्यहम् । येनात्र वसति द्वेष्यं, राज्ञः किञ्चन मानुषम् ॥ ४४ ॥ सम्भ्रान्ता मगधा दध्यौ, नूनं सामान्य एष न । नरः कोऽपि वरज्ञानी, प्रच्छन्नो भ्रमति क्षितौ ॥ ४५ ॥ ततो मत्पादयोर्लग्ना दीना सती

ततोऽमात्याः स्थिता यावत्, मौनमाश्रित्य सर्वथा । अन्ये लोका नरेन्द्रेण, तावत्तत्र प्रणोदिताः ॥३८॥ कृत्वा देव्याः शरीरस्य, स्नानपूजादिकं पुनः । तदुदक्षेपि तैलौकैः, शिबिकास्थं सुमार्चितम् ॥ ३९ ॥ सार्द्धं चचाल भूपालः, परिवार-समन्वितः । सबालवृद्धलोकेषु, क्रन्दत्सु करुणस्वरम् ॥ २४० ॥ दिने तस्मिन् पुरे तत्र, जलमन्नञ्च केनाचित् । न गृहीतं परं भूमिः, सिक्ताऽश्रुसलिलैर्भृशम् ॥४१॥ नाहसत्कोऽपि नाकार्षीदालापं केनचित्सह । एकमेवान्वभूत् शोक-दुःखं कृष्णमुखो जनः ॥ ४२ ॥ वज्राहत इव क्ष्वेडाघूर्णायमानवत्तदा । हृतसर्वस्ववच्छून्यहृदयोऽजानि पूर्जनः ॥४३॥ शकुनैर्मुमुचे चूर्णिस्त्यक्ता चारिश्चतुष्पदैः । शोकेन विवशैस्तत्र, तल्लोकानां तु का कथा ? ॥ ४४ ॥ हा वत्स ! दैव-वातेन, मङ्क्षु त्वं कुलदीपकः । विध्यापितोऽसि दुःखान्धकारे तेनापतन्मही ॥४५॥ वंशच्छेदो बभूवाद्य, कोऽस्मच्चिन्तां करिष्यति ? । इत्येवं कुलवृद्धासु, विलपन्तीष्वनारतम् ॥ ४६ ॥ धौरेयान् राज्यभारस्य, धिगस्मान् बुद्धिशालिनः । आत्मानमपि निन्दत्सु, महामात्यनरेषु च ॥ ४७ ॥ हा देव ! द्रक्ष्यसे क्व त्व, पुनः काममनोहरः । इत्येवं पुरनारीषु, रुदतीषु पुनः पुनः ॥ ४८ ॥ पितृवत्पालिता देव !, रुलिष्यन्ति प्रजा इमाः । इति स्मरत्सु लोकेषु, राजमार्गानु-यायिषु ॥ ४९ ॥ वर्ध्यन्ते तरवो देव !, सेचं सेचं यथाम्बुभिः । तथा युष्मत्प्रसादौघैर्वयमाजन्म वर्द्धिता ॥ २५० ॥

कस्मादिहायातौ च कीदृशौ ॥ ५८ ॥ मयोक्तं क्षत्रियावावां, चलितौ विषयान्तरे । सत्यङ्कनकवत्यापि, सर्वमङ्गीकृतं ततः ॥ ५९ ॥ तस्यामात्मकृतं सर्वं, कथयन्त्यां पुरो मम । विभातायां विभावर्यां, पुनः पृष्टं मया ततः ॥ ६६० ॥ सुन्दर्याख्याहि किंचित्ते, पार्श्वेऽस्त्याभरणादिकम् ? । अथानीय तया सर्वं, दर्शितं प्रीतया मम ॥ ६१ ॥ एतावन्मात्रमेवैतत्, पुनः पृष्टे तयोदितम् । लक्ष्मीपुञ्जाभिधो हारो, निक्षिप्तोऽस्ति मया तु सः ॥ ६२ ॥ क्वेति पृष्टे तयोचेऽस्ति, शून्यागारस्य सन्निधौ । चतुष्पथस्थिते कीर्तिस्तम्भस्य भृतकान्तरे ॥ ६३ ॥ दिवाहं नैव शक्नोमि, तत्र गन्तुं कथञ्चन । रजन्यामपि यास्यामि, नृपात्कृच्छ्रेण बिभ्यति ॥ ६४ ॥ ज्ञात्वा स्थानं महाहारं, तमाक्रष्टुं यदि क्षमा । तदागच्छ गृहीत्वा त्वं, पश्चाद्याव उभावपि ॥ ६५ ॥ अन्यथाऽऽगत्य सन्ध्यायां, कथनीयं त्वया मम । इत्यालोच्य मिथो मालादुत्तीर्णोऽहं ततः प्रिय ! ॥६६॥ पृष्टे मगधयाऽशंसि, मयाप्येवं तदग्रतः । तत्र प्रार्थनया भद्रे!, तथास्ति विहितं मया ॥६७॥ वारयन्त्यामपि यथा, त्वयैषा निशि यास्यति । ततो भोजनसामग्रीं, हृष्टा मे मगधा व्यधात् ॥ ६८ ॥ मया प्रच्छन्नया तत्र, गत्वा प्रैक्षि समन्ततः । गत्वा पुरोऽस्य स्तम्भस्य, प्रापि हारः परं न सः ॥ ६९ ॥ ततः कनकवत्येतत्, निशि गत्वा मयोदिता । गृहीत्वा तं महाहारं, तत्रागच्छेस्त्वमित्यपि ॥६७०॥ आपृच्छच मगधां वेश्यां, ततः स्थानात् कथञ्चन ।

राज्ञा वीरधवलेन, बोधिता अपि ते नृपाः । बहुधा सामदण्डाभ्यां, परमेवं बभाषिरे ॥ ९ ॥ प्रभातेऽत्र वयं सर्वे, हत्वा जामातरं तव । सुतामादाय तां राजन् !, गमिष्यामो न चान्यथा ॥ ७१० ॥ ततस्त्यक्त्वा नृपान् राजा, वेगादागत्य मन्दिरम् । प्रगुणां कारयामास, करभीं वायुजित्वरीम् ॥ ११ ॥ नृपस्त्वरयितुं यावद्वधूवरगृहं ययौ । अपश्यंस्तत्र तौ तावत्, पृष्टवानुपमातरम् ॥ १२ ॥ तयोर्गमनवृत्तान्तं, वेगवत्या निवेदिते । तदाऽऽगमनमार्गं स, पश्यंस्तस्थौ नराधिपः ॥ १३ ॥ सञ्जातेऽथ निशीथेऽपि, तत्र नायातयोस्तयोः । सर्वत्रालोकयद्राजा, व्याकुलस्तद्वधूवरम् ॥ १४ ॥ नाभवत्किन्तु कुत्रापि, तयोः शुध्धिरतः प्रगे । ज्ञात्वा सम्यग् ययुर्भूपा, विलक्षाः स्वपुराणि ते ॥ १५ ॥ अप्राप्तायां तयोः शुद्धौ, जामातृसुतयोः क्वचित् । दुःखितो भूपतिश्चित्ते, चिन्तयामासिवानिति ॥ १६ ॥ पृथ्वीस्थानपुरं तत्क !, क्वैषा चन्द्रावतीपुरी । कुमारी दुःखिता क्वैषा, क्व गुणी स महाबलः ? ॥ १७ ॥ मिलितो विधियोगेन, कार्यस्यात्र निदानके । अभाग्यैर्नः पुनः स्थाने, क्व सम्प्राप्ताविहार्भकौ ? ॥ १८ ॥ विद्युज्झात्कारवत् दृष्टौ, तावस्माभिस्तनन्धयौ । कटरे विधिसंयोग, इन्द्रजालोपमः स्फुटम् ॥ १९ ॥ विपाको यदि कार्यस्य, विधे ! व्यातस्त्वयेदृशः । तत्किं प्रकटितो मूलादेतयोर्दर्शनक्रमः ? ॥ ७२० ॥ अदत्तं भोजनं साधु, न स्थालं पुरतो हृतम् । वरं

ददृशे दैवयोगतः ॥ ६३ ॥ युग्मम् ॥ दृष्ट्वा नेत्रसुधाभां तां, राज्ञा लोकेन चोदितम् । अहो चित्रमहो चित्र-महो पुण्यमहाभरम् (रः) ॥६४॥ यज्जीवन्ती महादेवी, लब्धाऽस्माभिर्विना मृतिम् । रत्नावलीव कुर्वद्भिः, क्रीडां कचवरोत्करे ॥ ६५॥ आनीता शिबिकामध्ये, क्षिप्त्वा किंतु प्रियाऽत्र सा । तत्किं नैषा नचाप्येषा, किञ्चान्यच्छलकारणम् ॥ ६६ ॥ प्रविष्टा सैव काष्ठं किं, जीवन्ती बिभ्यती सती । ईक्षध्वं शिबिकामध्ये, ततोऽह्वायेत्युवाच राट् ॥ ६७ ॥ गत्वा राजनरा यावद्, अपश्यन् शिबिकां ततः । सङ्घर्षय ' करौ तावत्, वञ्चितोऽस्मीति च ब्रुवत् ॥ ६८ ॥ दन्तैर्दन्तान् भृशं पिंषद्ययौ तत् शबं दिवि । पश्यतां विस्मयेनोच्चैर्लोकानां विकसद्दृशाम् ॥ ६९ ॥ युग्मम् ॥ ततस्ते कम्पमानाङ्गा, भयेनाऽऽगत्य भूपतेः । स्खलद्गिरा गदन्ति स्म, सर्वमुत्सुकचेतसः ॥ २७० ॥ नरेश्वरो जगादाथ, विस्मयानन्दपूरितः । वेत्ति व्यतिकरस्यास्य, परमार्थं न कश्चन ॥ ७१ ॥ अस्तु तावत्परं सर्वं, देव्येवेहानुयुज्यते । इत्युदित्वा नृपेणोचे, स्ववृत्तान्तं वद प्रिये ! ॥ ७२ ॥ अपनिद्रा ततो देवी, दृशं चिक्षेप भूपतौ । सखेहं मिलितेवेयं, वर्षाद्वर्षशतादथ ॥ ७३ ॥ गलद्बाष्पाऽमिलद्देवीदृष्टी राज्ञो दृशा सह । तयोस्तदा स कोऽप्यासीद्धर्षो ऽयं वित्त एव तौ ॥ ७४ ॥ देवीं पप्रच्छ हे देव !, यूयं नद्यास्तटेऽद्य किम् ? । गलज्जलानि

## ॥ अथ तृतीयः प्रस्तावः प्रारभ्यते ॥

अथ कान्ता कुमारेण, गतेनोचे पुराद्बहिः । श्मशाने निशि नो युक्तं, स्त्रीणां सञ्चरणं प्रिये ! ॥ १ ॥ तत्ते करोमि पुंरूपमित्युक्त्वाऽऽम्ररसेन सः । घृष्ट्वा तां गुटिकां चक्रे, तस्या भाले विशेषकम् ॥ २ ॥ नृरूपा साऽभवत्तेन, ततस्तौ पुरुषावुभौ । गत्वा देवीगृहं तस्मात्तं चौरं चक्रतुर्बहिः ॥ ३ ॥ ऊचतुश्चेति रे कल्ये, चौरास्त्वामीक्ष्य ते गताः । त्वं तु क्षेमेण गच्छाद्य, यत्र ते मनसो रुचिः ॥ ४ ॥ प्राणलाभः स्वलाभश्च, प्रसादाद् युवयोर्मम । इति जल्पन्नमंश्चापि, शिरसा तस्करोऽगमत् ॥ ५ ॥ तौ द्वावपि समुत्तीर्य, पुराऽऽगमनहेतवे । देवीभवनद्वारेण, वटस्याधो गतौ यदा ॥ ६ ॥ तदाऽऽभ्यां शिखरेऽश्रावि, भूतालापः परस्परम् । अथ प्रोक्तं कुमारेण, तिष्ठ तिष्ठ प्रिये ! क्षणम् ॥ ७ ॥ दत्तकर्णा सकर्णे ! त्वं, शृणु भूता वदन्ति किम् ? । उपरिष्टाद् वटस्याग्रे स्थिता एते परस्परम् ॥ ८ ॥ मा मा हार्षुः पुनर्हारं, ध्यात्वेति नृपसूनुना । गृहीत्वा तं प्रियाकण्ठात्, क्षिप्तः कटिपटान्तरे ॥ ९ ॥ छन्नौ द्वावपि भूत्वा तौ, प्रविष्टौ वटकोटरम् । विहितचित्तौ तौ सर्वं, श्रोतुं लग्नौ महामती ॥ १० ॥ उवाचैको महाभूतो, यूयं शृणुत मे वचः । पृथ्वीस्थानपुरेशस्य, नन्दनोऽभून्महाबलः ॥ ११ ॥ जनन्यास्तस्य केनापि, हारोऽदृश्याऽऽत्मना हृतः । ततस्तेन

वस्त्राणि, युष्माभिः प्रावृतानि किम् ? ॥ ७५ ॥ किमत्र मिलितो लोकः, स्वामिन् ! किं रचिता चिता ? । शबस्य शिबिकैषा किं, मृतः किं कोऽपि मे वद ॥ ७६ ॥ राजा जगाद निश्शेषमिदं वक्ष्यामि देवि ! ते । किन्तु त्वं निज-वृत्तान्तं, पूर्वमाख्याहि नः स्फुटम् ॥ ७७ ॥ क्व गता क्व स्थिता काष्ठे, प्रविष्टा (घुण)वत्कथम् । हारलाभः कथं नद्याः, कथं वाहे प्रवाहिता ? ॥ ७८ ॥ देवी जगाद यद्येवमाध्वं यूयमिहाखिलाः । निकटस्थवटस्यास्य, मूले च्छायाति-शीतले ॥ ७९ ॥ राजाथ हृष्टहृदयो, गत्वा सर्वो जनोऽपि च । छायायां वटवृक्षस्य, स्वे स्वे स्थान उपाविशत् ॥ २८० ॥ ततो देवी निजं वृत्तं, प्रारेभे गदितुं तदा । सभाकर्णयतैकाग्रा, यूयमित्युक्तिपूर्वकम् ॥८१॥ देव ! त्वमपि जानासि, स्फुरितं दक्षिणाक्षि मे । तेनाशुभनिमित्तेन, नाभूत्कुत्रापि मे रतिः ॥ ८२ ॥ भ्रामं भ्रामं वनाद्येषु, निर्विण्णा सौधमागता । ततो वेगवती दासी, पत्रार्थं प्रेषिता मया ॥ ८३ ॥ निद्रया घूर्णमानाक्षी, यावत्पल्यङ्कमाश्रिता । निद्राणा केनचित्तावदुत्क्षिप्ताऽहं दुरात्मना ॥८४॥ नीत्वा तेन विमुक्ताऽहं, शून्ये पर्वतमूर्द्धनि । स्वयं पलायितः क्वापि, स दुष्टो निष्ठुरः पुनः ॥ ८५ ॥ कांदिशीका ततो भीतिकम्पमानतनूरहम् । दिशः सर्वाः प्रपश्यन्ती, शिलातलपातसमु-त्थिता ॥ ८६ ॥ पुरः कमपि नापश्यं, न पृष्ठे नापि पार्श्वयोः । शुश्राव केवलं शब्दान्, सिंहव्याघ्रादिदेहिनाम्

जाग्रति ह्यावयोः प्रिये ! ॥ २५ ॥ वटो यदेष संप्राप्तः, पृथ्वीस्थानपुरं मम । तत्त्यजावोऽधुना शीघ्रमावां न्यग्रोधको-
टरम् ॥ २६ ॥ देवादेशेन कुत्रापि, पुनर्यास्यति चेद्वटः । पतिष्यावस्ततः क्वापि, गत्वावां विषमे ननु ॥ २७ ॥
मन्त्रयित्वेति सहसा, निरीय वटकोटरात् । यावत्तौ तस्थतुः स्वस्थावासन्ने कदलीवने ॥ २८ ॥ उत्पतन्तं वटं
तावत्, दृष्ट्वा ताविति दध्यतुः । एष वृक्षो निजं स्थानं, पुनः सम्प्रति गच्छति ॥ २९ ॥ इतश्च वनिताक्रन्दं, श्रुत्वा
दीनं महाबलः । पुंरूपां स्थापयामास, तत्र तां दयितामपि ॥३०॥ अधुनैवाऽऽगतोऽत्राहं, कर्त्तव्या नाधृतिः प्रिये ! ।
इत्युक्त्वाऽनुस्वरं याति, कुमारः कृपया ततः ॥ ३१ ॥ महाबलकुमारस्य, पश्यन्ती मार्गमेकिका । शून्ये रम्भावने
तत्र, तस्थौ मलयसुन्दरी ॥ ३२ ॥ अतिक्रान्ता निशास्तस्याः, स नायातीति चिन्तया । प्रभाते सति सा दध्यौ,
यामि तावत्पुरान्तरे ॥ ३३ ॥ भविष्यति गतस्तत्र, पित्रोरुत्कण्ठितो हि सः । ध्यात्वेति चलिता यावत्, साऽविशत्,
गोपुरं पुरः ॥३४॥ तलारक्षेण तावत्स, दिव्यवेषो विलोकितः । उक्तश्चाहो युवन् ! कोऽसि, त्वमपूर्वोऽत्र मे पुरे ?॥३५॥
अब्रुवाणे किमप्यस्मिन्, दिशो मौनेन पश्यति । सम्यगालोकितं दण्डपाशिकेनेतरैरपि ॥ ३६ ॥ तानि कुण्डलवस्त्राणि,
देहे तस्योपलक्ष्य तैः । ऊचे कुमारसत्कानि, नूनमेतान्यदः किमु ? ॥३७॥ तलारक्षेण तेनाशु, राजान्तिकमनायि सः ।

॥ ८७ ॥ क्व गच्छामि क्व तिष्ठामि, चिन्तयन्तीति चेतसि । कृत्वाऽथ साहसं वेगात्, प्रस्थितैकां दिशं प्रति ॥८८॥ कुत्र सा नगरी रम्या, क्व स मे प्राणवल्लभः । अपजहेऽहमेतेन, किमकारणवैरिणा ? ॥ ८९ ॥ उद्बन्धयाम्यहं स्वं किं, झम्पामद्रेर्ददामि किम् । स्वयं चेद्म्रियते हृच्च, ततो दुःखात् छुटाम्यहम् ॥ २९० ॥ इति ध्यायन्त्यहं यावत्, प्रस्खलन्ती पदे पदे । गता स्तोकभुवं तावदद्राक्षं जिनमन्दिरम् ॥ ९१ ॥ त्रिभिर्विशेषकम् ॥ गत्वा तत्र मयाऽप्येवं, संस्तुतो वृषभप्रभुः । अन्धकारे यथा दीपो, मरौ पद्माकरो यथा ॥ ९२ ॥ अवृक्षाद्रौ यथा कल्पवृक्षः पोतो यथाऽम्बुधौ । तथा पुण्यैर्मयाऽऽसोऽसि, छिन्द्धि दुःखानि मे प्रभो ! ॥९३ ॥ एवं विज्ञपयन्त्या मे, पार्श्वे नारी कुतश्चन । एका दिव्या समागत्य, वक्तुमेवं प्रचक्रमे ॥९४॥ विलोक्य जिनभक्तिं ते, दुःखभारं च सुन्दरि ! । प्रकटाऽस्यादिनाथस्य, शासनस्याधिदेवता ॥९५॥ एतस्यादिजिनेन्द्रस्य, भुवनस्य सनीडगे(भवनिस्तारकस्यवै) । वसन्ती भुवने रक्षां, कुर्वे चक्रेश्वरीत्यहम् ॥९६॥ मलयाद्रौ ममैतस्मिन्, भवनं तेन वर्त्तते । मलयेति द्वितीयं च, नाम लोके प्रसिद्धिभाग् ॥९७॥ तद्धीरा भव मा भीस्त्वं, धीरयन्त्येति मे तथा(धीरयन्त्यै मयेत्यथ) । साधर्मिकीति पाणिभ्यां, दत्तं वन्दनमादरात् ॥९८॥ ततो देव ! मया पृष्टा, सा देवी केन हेतुना । समानीता च केनाहं, किं मिलिष्यामि बन्धुभिः ! ॥९९॥ ऊचे चक्रेश्वरी देवी, शुभे !

निगृहीतोऽत्र, पौरसर्वस्वमोषकः । लोभसारोऽभिधानेनालम्बाद्रेः कन्दरास्थितः ॥ ५१ ॥ तस्यैष बान्धवः कोऽपि, सम्बन्धी वाऽपरो नरः । साम्प्रतं तद्वियोगेन, निर्बुद्धिश्चलिताशयः ॥ ५२ ॥ सम्भ्रमी बम्भ्रमीत्यत्र, तं पश्यन्निजबान्धवम् । बिभ्रद्द्वेषं कुमारस्य, बहुमौनोऽल्पभाषकः ॥ ५३ ॥ सम्भाव्यते हतोऽमीभिः, कुमारोऽपि महाबलः । अत एषोऽपि मे वैरी, नीत्वा तत्र निहन्यताम् ॥५४॥ इति श्रुत्वापि सा दध्यौ, चित्ते मलयसुन्दरी । अहो पुनः समायातं, ममैतदसमञ्जसम् ॥५५॥ प्राणान्तिका महापद् मे, पुनरेषा समाययौ । अलक्षितानि केनापि, विधेर्विलसितान्यहो ॥५६॥ चिन्तयन्त्यां तमेवैकं, श्लोकं मौनेन चेतसि । तस्यामूचे महामात्यैः, सम्यग् न ज्ञायतेऽपि किम् ॥ ५७ ॥ न साधुः कोऽपि चेदेष, न चौरश्चेष्टयाऽनया । पुरुषस्योचितं दातुं, दिव्यमेतस्य देव ! तत् ॥५८॥ यद्यशुद्धस्तदा चौरः, साधु शुद्धश्च यद्ययम् । इत्थं कृते तु युष्माकं, नापवादो जने भवेत् ॥ ५९ ॥ तत्स्वीकृत्य नृपेणोचे, दिव्यं देयं तु कीदृशम् ? । तैः प्रोचे घटसर्पस्य, दिव्यं गाढं नरेश्वर ! ॥ ६० ॥ राजादिष्टास्ततो जग्मुः, सर्पमानेतुमुत्कटम् । मेखलायामलम्बाद्रेः, तस्यां गारुडिका द्रुतम् ॥ ६१ ॥ लात्वा कुण्डलवस्त्राणि, स नरो नरवज्रिणा । नगरारक्षकपुंसां, रक्षणाय समर्पितः ॥ ६२ ॥ इतश्च तत्र सम्प्राप्ता, पद्मावत्या महल्लिका । नृपं विज्ञपयामास, रुद्धकण्ठा शुचा-

मेष स्वयं ततः ॥ १ ॥ न सामान्यो भुजङ्गोऽयं, सर्परूपेण किंत्वसौ । देवो वा दानवो वापि, किंवा शेषः स्वयं ह्ययम् ॥ २ ॥ विचित्रशक्तिकौ किं वा ?, कावप्येतौ नरावुभौ । प्रच्छन्नौ केन कार्येण, क्रीडन्तोऽन्तःपुरं किल ॥ ३ ॥ ज्ञायते परमार्थो नाधुना तत्किं करोम्यहम् ? । आराधयामि भक्त्येमौ, भक्तिग्राह्या हि देवता ॥ ४ ॥ उच्चिक्षेपागरुं भूपः, पुष्पाद्यैरतमपूपजत् । जजल्प च प्रसद्याहिराज ! मुञ्चाशु सुन्दरीम् ॥ ५ ॥ भगवन्नहिराज ! त्वं, मया दूनोऽस्यनेकधा । तत्प्रसद्य त्वया सर्वः, सोढव्यो दुर्नयो मम ॥ ६ ॥ तया मुक्तोऽथ सर्पः स, रमण्याऽऽशु करा-म्बुजात् । राजा च ढौकयामास, पुरस्तस्य पयो द्रुतम् ॥ ७ ॥ पायं पायं च तद् दुग्धं, यावत्सौहित्यमाप सः । राज्ञा तावत्समादिष्टास्त एवेत्याहितुण्डिकाः ॥ ८ ॥ अहो एष महासर्प, आनीतः स्थानकाद्यतः । गृहीत्वा तत्र युष्माभिर्मोक्तव्योऽतिप्रयत्नतः ॥ ९ ॥ यदि स्तोकाऽपि पीडाऽस्य, नागराजस्य निर्मिता । ततो युष्मानहं सर्वान्, हनिष्यामि स्वयं ननु ॥ ११० ॥ तथेत्युक्त्वाऽहिमादाय, मुक्त्वा तत्र सुखेन ते । पुरमागत्य भूपायाशंसन् राजनरैः सह ॥ ११ ॥ अथोचे सा नृपेण त्वं, पुंरूपाऽभूः शुभेऽधुना । अस्माकं पश्यतामेव, सञ्जाता युवती स्फुटम् ॥ १२ ॥ परमार्थः क ईदृक्षः, काऽसि त्वं वररूपभाग् ? । सत्यमाख्याहि मे सर्वं, येन स्याच्चित्तनिर्वृतिः ॥ १३ ॥ दध्यौ साऽन्तेऽपि

तम् । पुत्रः पुत्री च युग्मं ते, भविष्यत्याशु सुन्दरि ! ॥ १३ ॥ इयतो दिवसान् यस्माद्, भूतेनानेन वैरिणा । युवयोः सन्तते रोधो, विदधेऽनुचरेण मे ॥ १४ ॥ वारयिष्याम्यहं तं तु, साम्प्रतं भवतोर्द्वयोः । अपकुर्वन्तमात्मीयं, किङ्करं वशवर्त्तिनम् ॥ १५ ॥ अथोत्पन्नमहासौख्यः, प्रशशंसेति तां नृपः । उत्पन्ना सुमतिः साधु, त्वया साधु च मार्गितम् ॥ १६ ॥ साध्वेष चोद्धृतो वंशः, साधु चिन्ता हृता हृदः । त्वां विना मम दुःखानां, संहर्त्ता कः पुनः ! प्रिये ? ॥१७॥ यद्देवि ! मन्त्रणीयं प्रागासीत्तव ममापि च । पुत्रस्य विषये तत्ते, दुःखितताया अपि स्मृतम् ॥ १८ ॥ तयाऽथो मलया-देव्या, किं किं चोपकृतं तत्र । इत्युक्ते नरनाथेन, प्रोचे चम्पकमालया ॥ १९ ॥ लक्ष्मीपुञ्जाभिधं हारं, गृहाणामुं विवेकिनि ! । जल्पन्त्येति तया क्षिप्तो, हारो मे कण्ठकन्दले ॥ ३२० ॥ तयाऽभाणि च हारोऽयं, दुर्लभः सुन्दरि ! त्वया । सप्रभावः सदा शस्यो, धार्यः कण्ठावलम्बितः ॥ २१ ॥ अपत्यानि प्रभावन्ति, भविष्यन्ति मनोरथाः । युवयोः पूरयिष्यन्ति, हारस्यास्य प्रभावतः ॥२२॥ दत्तः सुवृत्तमुक्तानां, हारोऽयं देव ! मे वरः । मलयाभिधदेव्या सा, सतीर्थ्यत्वानुरक्तया ॥ २३ ॥ ततो मया पुनः पृष्टा, सा देवी नरनायक ! । क्व गतो देवि ! भूतः स, येनाहं मन्दिराद् हृता ? ॥२४॥ देव्युवाच ततो मुक्त्वा, शुभे ! त्वामिह पर्वते । चन्द्रावत्यां पुनः पुर्यां, ययौ वेगेन सोऽमरः ॥२५॥

हा मया मूढया तादृग्, पुत्ररत्नं महापदि । अस्य हारस्य कार्येण, पातितं दुर्लभं पुनः ॥ २७ ॥ रत्नं पाषाणकार्येण, सुधा पानीयहेतवे । कल्पवृक्षश्च निम्बार्थं, देव ! निर्गमितो मया ॥ २८ ॥ जीवित्वा किं करिष्यामि ?, तन्निर्भाग्य-शिरोमणिः । देव ! प्रेषय मां येन, भृगुपातं तनोम्यहम् ॥ २९ ॥ राजा जगाद देवि ! त्वं, स्थापिताऽसि पुरा मया । आप्रभातं न वक्तव्यमत्रार्थे किमपि त्वया ॥ १३० ॥ तावद्धारोऽपि लब्धोऽयमतर्कित इहाधुना । समेष्यति कुमारोऽपि, पुण्यैरेवं कुतोऽपि नः ॥ ३१ ॥ संधीर्येति प्रियां राजा, ययौ निजनिकेतनम् । स्वं स्वं स्थानं समस्तोऽपि, जनो विस्मितमानसः ॥ ३२ ॥ देव्या समं गताऽऽवासं, सा स्त्री मलयसुन्दरी । कारिता भोजनादीनि, कृत्यान्य-गमयद्दिनम् ॥ ३३ ॥ देव्या समं महीपोऽपि, कुमारविरहार्दितः । दिनशेषं निशां चापि, कृच्छ्रेणाप्यत्यवाहयत् ॥ ३४ ॥ प्रेषिताः शुद्धिकार्येण, प्रातरागत्य ते नराः । सर्वेऽप्यूचुः कुमारस्य, शुद्धिर्नाप्ता प्रभो ! क्वचित् ॥ ३५ ॥ निराशौ तौ ततो राजा, राज्ञी च द्वावपि द्रुतम् । जग्मतुर्गिरिपादान्तं, यावन्मरणहेतवे ॥ ३६ ॥ तावत्तत्र समागत्य, केऽपि वास्तव्यपूरुषाः । श्वासपूर्णमुखा भूमीपालमेवं व्यजिज्ञपन् ॥ ३७ ॥ धनञ्जयस्य यक्षस्य, पार्श्वे गोलानदीतटे । यत्रोद्बद्धोऽस्ति चौरः सः, लोभसारो वटद्रुमे ॥ ३८ ॥ तत्रैवातिदृढस्थूलशाखायुग्मस्य मध्यतः ।

पाम्भः स्वयं मुखे ॥५१॥ युग्मम् । समुन्मीलितनेत्रोऽथ, विस्फुरच्चारुचेतनः । पद्मावत्या जनन्येति, सादरं भाषितः सुतः ॥ ५२ ॥ हा वत्स दुर्लभालोक !, मया त्वं हीनसत्त्वया । हारालोकनकार्येण, समादिष्टस्तदाऽऽज्ञया ॥ ५३ ॥ क्व गतस्त्वं स्थितः कुत्रानुभूतं किं किमु त्वया ? । कुमारैषा कथं जाता, दुःस्थावस्था तवापि च ? ॥५४॥ राजोचे कथयास्माकं, चित्तं वत्स ! समुत्सुकम् । नालं कालविलम्बाय, गर्जिते शिखिनादवत् ॥५५॥ क्षिपन् सर्वत्र नेत्राणि, विशेषेण नवस्त्रियाम् । कुमारः स्माह वृत्तान्तमनुभूतं ततो निजम् ॥ ५६ ॥ मध्येसौधं यथाऽऽयातः, करस्तेन हृतो यथा । इत्यादि पुनरेवात्र, रम्भोद्यानागमावधि ॥५७॥ तथैव सर्वमाख्याय, कुमारः पुनरब्रवीत् । मुक्त्वा युष्मद् वधूं तत्रागां ताताहमनुस्वरम् ॥ ५८ ॥ युग्मम् । इतश्च कृतनीरङ्गीं, सावधानां प्रियां प्रति । क्षिपन्नेत्रे जगादैष, कुमारःश्रृणुताग्रतः ॥ ५९ ॥ गच्छताऽथ मया दृष्टो, मन्त्रं किमपि साधयन् । एकाक्येव महायोगी, सज्जितोपस्करो वने ॥ १६० ॥ मद्दर्शनेन मुक्त्वाऽऽशु, सर्वं व्यापारमात्मनः । अहमभ्यर्थितस्तेन, कृताभ्युत्थानकर्मणा ॥ ६१ ॥ अहो कुमारवीरेन्द्र !, परोपकृतिकर्मठ ! । त्वमद्यात्रासहायस्य, सम्प्राप्तः सुकृतैर्मम ॥ ६२ ॥ अयं येन महामन्त्रः, प्रारब्धोऽस्ति प्रसाधितुम् । सिद्धे मन्त्रेऽत्र कनकपुरुषः सेत्स्यति ध्रुवम् ॥ ६३ ॥ सामग्रीयं मया सर्वा, मेलिताऽस्ति कुमार ! वै । एक

करिष्यति ततो भार्या, शीलं ते खण्डयिष्यति ॥ ३८ ॥ भविष्यति सपत्नीजं, दुःखं मेऽपि सुदुस्सहम् । तदेहि त्वं द्रुतं येन, भवेत्सर्वं सुसूत्रितम् ॥ ३९ ॥ जल्पन्तीति स्वहस्तेन, गृहीत्वा मां नभश्वरी । आसन्नायास्तरङ्गिण्या, वहन्त्यास्तीरमन्वगात् ॥ ३४० ॥ मयाऽध्यायि किमेषा मां, हनिष्यत्यथवा किमु । उद्बन्धस्यतीह वृक्षाग्रे, किं वा क्षेप्स्यति कन्दरे ॥ ४१ ॥ किं वा नदीप्रवाहेऽत्र, वाहयिष्यति वेद्मि न । किं वाऽथ चिन्तया भूरिदुःखे दुःखमदुःख-कृत् ॥ ४२ ॥ तत्राभूत्पतितं शुष्कं, स्थूलं काष्ठं स्वभावतः । विद्याशक्त्या ततश्चोर्द्ध्वं, तद्द्वेधा विहितं तया ॥ ४३ ॥ ते मध्ये शुषिरे कृत्वा, दले द्वे पुरुषप्रमे । गोशीर्षचन्दनेनाहं, सर्वाङ्गमन्वलेपि च ॥ ४४ ॥ कर्पूरागरुकस्तूरी-प्रमुखैर्गन्धवस्तुभिः । समलंकृत्य खेचर्या, तयाऽभाणीति मा प्रति ॥ ४५ ॥ एहि त्वं हे शुभे ! शीलं, येन रक्षामि तेऽधुना । जल्पन्त्येति तदा क्षिप्ता, फालीमध्येऽहमेतया ॥ ४६ ॥ काष्ठफाली द्वितीया च, दत्ता मङ्क्षु ममोपरि । न जानेऽतः परं किञ्चित्, गर्भवास इव स्थिता ॥ ४७ ॥ अधुनाऽत्र ततो दृष्टा, यूयं प्राक्पुण्ययोगतः । युष्माकं कथितः स्वामिन्!, वृत्तान्तोऽयं निजोऽखिलः ॥ ४८ ॥ नृपेणाभाणि देवि ! त्वं, पतिता हा महापदि । प्राणत्यागः समारब्धो, मयाऽपि विरहे तव ॥ ४९ ॥ ज्वलच्चिताप्रवेशं मे, दृष्ट्वा लोकोऽपि दुःखितः । तेनैष

जापमेवं वितन्वतः । ततो डमरकध्वानाः, श्रूयन्ते स्म विहायसि ॥ ५२ ॥ कुशुद्धं मृतकं ह्येतत्, पुरुष ! रे न सेत्स्यति । जल्पन्तीत्यवतीर्णाऽत्राऽदेवता कुपिता तदा ॥ ५३ ॥ तया देवतया योगी, केशग्राहं ससाधकः । उल्लाल्य चिक्षिपे मध्ये, ज्वलज्ज्वलनकुण्डकम् ॥ ५४ ॥ तद् दृष्ट्वाऽहं दृढाङ्गोऽपि, क्षुब्धः किञ्चन मानसे । अतस्तया निबद्धौ मे, हस्तौ पन्नगपाशकैः ॥ ५५ ॥ कुमारं सुन्दराकारं, क एनं मारयिष्यति । जल्पन्तीति गता व्योम्नि, सा मां धृत्वाऽऽशु पादयोः ॥ ५६ ॥ शाखायुग्मस्य मध्येऽत्र, क्षिप्त्वांह्रियुगलं मम । गता सा देवता शीघ्रं, लम्बमानः स्थितस्त्वहम् ॥ ५७ ॥ अत्रेदं मृतकं चापि, तथैवागत्य तस्थिवान् । ईक्षांबभूवुस्तत्सर्वे, चालयित्वाऽथ कन्धराम् ॥ ५८ ॥ ऊचुश्चाक्षतसर्वाङ्गं, कुशुद्धं मृतकं कथम् ? । ततोऽवदन्नृपः शीघ्रं, धुन्वन् किञ्चिच्च चिन्तयन् ॥५९॥ अहो यत्रोटितं दन्तैः, स्त्रीनासाग्रं किलामुना । भविष्यत्यास्यमध्ये तत्, कुशुद्धं तेन नन्विदम् ॥२६०॥ शिरः सर्वेऽपि धुन्वन्तो, जल्पन्ति स्म नृपं प्रति । एवमेव नरेन्द्रेदं, नान्यथा ते वरा मतिः ॥६१॥ राजाऽपि वीक्षयामास, तन्मुखं निजपूरुषैः । नासाग्रे वीक्षिते तत्र, सर्वेषां प्रत्ययोऽभवत् ॥६२॥ सखेदं राजसूराख्यत्, नैतज्ज्ञातं मयाऽपि हा । महद्विनाशितं कार्यं, योगिनः कथितं न तत् ॥ ६३ ॥ राजोचे वत्स ! मा खेदं, कार्षीस्त्वं हृदये वद । नागबन्धः कथं नष्टः, सुदृढो

मिलितः सर्वो, गोलानद्यास्तटेऽधुना ॥ ३५० ॥ मन्त्री सुबुद्धिरूचे च, सपत्नीशङ्कया तया । देवी चम्पकमालैषा, निक्षिता काष्ठसम्पुटे ॥ ५१ ॥ काष्ठसम्पुटमेतच्च, बद्ध्वाऽलं रज्जुबन्धनैः । नगोत्तरनदीवाहे, खेचर्याऽत्र प्रवाहिता ॥ ५२ ॥ जीवघातेन नैवास्य, सा विद्या किल सिध्यति । तत्रैव न हता देवी, खेचर्यैवं प्रवाहिता ॥ ५३ ॥ अस्माकं पुण्यवत्काष्ठं, तरद् दूरात्तदागतम् । दृष्टमादायि चास्माभिर्लब्धा देव्यप्यतर्किता ॥ ५४ ॥ यदद्य पूर्वयामान्ते, युष्माकं मिलिता प्रिया । सत्यं देवीवचो जातं, सप्तयामान्तसङ्गमात् ॥ ५५ ॥ नृपो जगाद न ज्ञाता, माया भूतस्य केनचित् । अहो राज्यक्षयं कर्त्तुं, प्रवृत्तस्यातिमायिनः ॥ ५६ ॥ कुलस्य कुशलं कृत्वा, पुत्रं देवी यदर्पिता । उपद्रवन्नयं भूतो, वारितस्तद्वरं कृतम् ॥५७॥ आधारस्तीव्रदुःखानामपहारोऽपि ते प्रिये ! । अग्रौषधनयेनैष, बभूव शुभहेतवे ॥ ५८ ॥ काष्ठफाल्यौ नृपेणाथामोच्येतां ते उभे अपि । भट्टारिकागृहे गोलानदीतीरविभूषणे ॥ ५९ ॥ अत्रान्तरे नरेन्द्रस्य, कालज्ञापनहेतवे । गम्भीरोद्दामशब्देन, पेठे वृत्तं सुबन्दिना ॥ ३६० ॥ हेलोत्तीर्णवियद्विशार्णवजलप्राप्तोल्लसज्ज्ञाप्रियः, स्वैरं विश्रमयन्निलाधरशिरश्चक्रे प्रतापं निजम् । तन्वानः सुपथो विकाशकमलामोदैर्जगत् प्रीणयन्, सर्वस्योपरि वर्त्तते रविरयं देवोऽधुना त्वं यथा ॥६१॥ ततः सुबुद्धिना राजा, विज्ञप्तो देव ! साम्प्रतम् । सम्प्राप्तवा-

रथं प्रगुणितं च तास्। चलिता वायुवेगेन, सुभटा अटवीं प्रति ॥ २ ॥ ततः साऽचिन्तयच्चित्तेऽधिक्षिपन्तो नरा अमी। निहन्तुमथवा त्यक्तुं, नयन्ति क्वापि मामितः ॥ ३ ॥ अपराधं परं कञ्चिन्न जानाम्यहमात्मनः। अथ पूर्वार्जितं कर्म, ममाशुभमुपस्थितम्॥४॥ ततो रे जीव! यद् दुःखं, तवागच्छति साम्प्रतम्। तत्सर्वं सह देहेनामुना भूत्वाऽतिकर्कशः॥५॥ चिन्तयन्तीति सा चित्ते, विपाकं निजकर्मणः। महाबलकुमारेणाख्यातं तं श्लोकमस्मरत् ॥६॥ सा तैर्नीत्वाऽटवीं छन्ना, मुक्ता मलयसुन्दरी। दुःखं न लभते कोऽत्र, ? पूर्वकर्मोदये यतः ॥७॥ आगताः कृतकर्त्तव्या, इत्याख्याते प्रगेऽथ तैः। सविशेषं च पूरक्षां, राजाऽशिथिलयत्ततः ॥ ८ ॥ दापयामास सर्वत्र, तालकानि वधूगृहे। निर्नासां प्रेक्षयामास, तां, नारीं किन्तु नापि सा ॥ ९ ॥ अथ निर्जित्य तं भिल्लं, कतिभिर्दिवसैः पुनः। महाबलः समायातो, दयितोत्कण्ठितो भृशम् ॥ ४१० ॥ नमस्कृत्य पितुः पादौ, गदित्वोदन्तमात्मनः। यावन्मलयसुन्दर्याः, प्रस्थितः स गृहं प्रति ॥ ११ ॥ तावद्धृत्वा करे तस्मै, सूरपालेन भूभुजा। सर्वं मलयसुन्दर्याः, कथितं तद्विजृम्भितम ॥१२॥ कुमारो निःश्वसन् दीर्घं, घर्षन्नात्मकरौ ततः। सगद्गदं ससीत्कारं, वक्तुमेवं प्रचक्रमे ॥ १३ ॥ हा हा भ्रान्तोऽसि तातस्त्वं, किं विचारबहिर्मुखः ? । तात! धातुविपर्यासोऽधुना तव बभूव किम् ? ॥१४॥ त्वयादीर्घधिया देव!, यावत् मम समागमम्। विलम्बितं न तत्

ञ्छिता यूयं, पुरे गच्छन्तु जेमितुम् ॥६२॥ क्षुधापीडितगात्राऽपि, देवी शक्ता न जल्पितुम्। विस्मारयतु तद् दुःखं, पूर्वं स्नानाशनादिभिः ॥ ६३ ॥ प्रति देवीं क्षिपन् राजा, दृष्टिं स्नेहेन निर्भराम्। गजारूढः प्रियायुक्तश्चचाल भवनं प्रति ॥ ६४ ॥ वाद्यमानेषु वाद्येषु, पूरिताम्बरकुक्षिषु। पठत्सु बन्दिवृन्देषु, जय जीवेति मङ्गलम् ॥ ६५ ॥ कृतासु हट्टशोभासु, तत्कालं नगरैर्जनैः। निराकृत्य शुचं हर्षे, सर्वतः परिसर्पति ॥ ६६ ॥ लोकानामाशिषः शृण्वन्, गृह्णन् मङ्गलकानि च। देव्या सार्द्धं महीपालो, निजं सौधं समासदत् ॥६७॥ त्रिभिर्विशेषकम्। सामन्तामात्यमुख्योऽथ, लोकः सर्वोऽपि हर्षवान्। विसृष्टो भूपतिं नत्वा, ययौ स्वं स्वं निकेतनम् ॥ ६८ ॥ कृत्वा स्नानं नृपेणाथ, देवपूजां च भोजनम्। सकलेऽपि पुरे तस्मिन्, वर्धापनमकारि च ॥ ६९ ॥ तस्मिन्नेव दिने देवी, दिव्यहारसमन्विता। गर्भं बभार सौभाग्यभारसम्भारशालिनी ॥ ७० ॥ प्रवर्द्धमानगर्भस्याभिज्ञानानि यथा यथा। नृपोऽपश्यत्प्रमोदेन, ममौ नाङ्गे तथा तथा ॥ ७१ ॥ स देव्याः पूरयामास, कल्पनां कल्पवृक्षवत्। कारयामास चाङ्गस्य, रक्षां दक्षो विशेषतः ॥ ७२ ॥ अथो दिनेषु पूर्णेषु, राज्ञी पुण्यमुहूर्त्तके। सुषुवे युगलं पुत्रपुत्र्यो रूपगुणाधिकम् ॥ ७३ ॥ नृपं वर्द्धापयामास, दासी वेगवती तदा। नृपोऽप्यनाशयत्तस्या, दासीत्वं दानकर्म्मभिः ॥ ७४ ॥ अपत्यागमहर्षेणोल्लसद्रोमा नरेश्वरः। आदिदेश

यावदुद्घाटयामास, मञ्जूषां तां कुमारकः । अपश्यंस्तत्र सर्वेऽपि, तावत्तां छिन्ननासिकाम् ॥ २८ ॥ विवस्त्रां राक्षसी-रूपां, क्षुधाशुष्कां विलोक्य ताम् । विस्मयेन क्षणं तस्थुस्ते सर्वेऽपि नृपादयः ॥ २९ ॥ कुमारोऽथ नृपं प्रोचे, दृष्टा या राक्षसी त्वया । एषैव सा महाराज !, कृतवेषा कथञ्चन ॥ ४३० ॥ कर्षयित्वा ततस्तां स्त्रीं, ताडयामास निष्ठुरम् । कुमारः स तथा सर्वं, यथा सा स्वकृतं जगौ ॥ ३१ ॥ कुपितेन ततो राज्ञा, पापा निर्भर्त्स्य सा भृशम् । देशत्यागेन निर्दिष्टा, निन्द्यमाना पुरीजनैः ॥ ३२ ॥ कुमारो मौनमालम्ब्य, शोकेन विवशो भृशम् । त्यक्त्वा चतु-र्विधाहारं, मर्तुकामः स्वयं स्थितः ॥ ३३ ॥ ततो राजा च देवी च, परिवारजनोऽपि च । सञ्जातो दुःखतप्तोऽनु, कुमारं मरणोत्सुकः ॥ ३४ ॥ राज्योच्छेदभयाज्जाता, व्याकुलाः सचिवा अपि । चिन्ताचक्रे समारूढः, पुरलोकोऽपि विह्वलः ॥ ३५ ॥ इतश्च तत्र सम्प्राप्तः, प्रतिहारनिवेदितः । एकोऽष्टाङ्गनिमित्तज्ञो, गणकः पुस्तकान्वितः ॥ ३६ ॥ ततः किञ्चित्समाश्वस्तैर्मन्त्रिभिः कृतभक्तिभिः । परोपकारी पप्रच्छे, नैमित्तिकशिरोमणिः ॥ ३७ ॥ इत्थमित्थं च हस्तान्नो, वधूर्मलयसुन्दरी । निष्कलङ्का समुत्तीर्णा, कुमारस्यास्य वल्लभा ॥ ३८ ॥ दुःखेन तेन राजाऽसौ, सकुटुम्बो-ऽशनं विना । मरणैकमना आस्ते, भयभीतो जनोऽपि च ॥३९॥ ततो ब्रूहि निमित्तज्ञ, ! साऽस्माकं सुकृतैरिह । जीवन्ती

दशाहानि, स्पर्द्धावर्द्धापनं पुरे ॥ ७५ ॥ सुधाधौतानि सौधानि, पौराणां विष्टितानि च । उत्तम्भितानि सौवर्णमुशलानि हलानि च ॥७६॥ जनाः प्रज्वलयामासुः, श्रेण्या काञ्चनदीपकान् । द्वारेषु स्थापयामासुः, सौवर्णान् कलशांस्तथा ॥ ७७ ॥ स्थापिता लोकरक्षार्थं, द्वारे कृष्टासयो भटाः । उच्छ्रिता मन्दिरेषूच्चैर्वैजयन्त्यः समन्ततः ॥७८॥ प्रमार्ज्य च पथो दासा, सिषिचुः कुङ्कुमद्रवैः । सहकारदलैरेते, बबन्धुस्तोरणानि च ॥ ७९ ॥ राजमार्गेषु सर्वेषु, त्रिकेषु चत्वरेषु च । रत्नकाञ्चनदानानि, दापयामास भूपतिः ॥ ८०॥ अमुचद्द्वेषिणो बद्धान्, काराः सर्वा विशोधयन् । अमारिं घोषयामास, देशेऽसौ दश वासरान् ॥८१॥ पूजयामास बिम्बानि, जिनानां जिनमन्दिरे । लोकं चकार चादण्ड्यमकरं च नरेश्वरः ॥ ८२ ॥ नेदुर्दुन्दुभयो दिव्या, ननृतुर्वारयोषितः । अक्षतानां च पात्राणि, विशन्ति स्म नृपौकसि ॥ ८३ ॥ पुष्पताम्बूलवस्त्राणि, महार्घाभरणानि च । राजदत्तानि हर्षेण, गृह्यन्ते स्म सनाभिभिः ॥ ८४ ॥ युग्मजन्मोत्सवे तत्र, प्रमोदेन पुरीजनः । न गेहे न च देहेऽपि, ममौ क्वापि भवन् महान् ॥८५॥ सम्मान्याथ विशेषेण, भोजनाच्छादनादिभिः । गोत्रवृद्धानुवाचैवं, राजा द्वादशवासरे ॥८६॥ तुष्टया मलयादेव्याऽपत्ये दत्ते उभे इमे । अस्मभ्यमनपत्येभ्यो, देवानामपि दुर्लभे ॥८७॥ देवीनाम्ना भवत्वस्य, नाम युग्मस्य सम्प्रति । कुमारोऽयं मलयकेतुः, पुत्री मलयसुन्दरी ॥८८॥ दत्त्वा

चित्ते मलयसुन्दरी ॥ ५७ ॥ विक्रेष्यति विदेशे मां, किं वा क्षेप्स्यति सागरे । मारयिष्यति किं वैष, सार्थवाहो दुराशयः ॥ ५८ ॥ यद्भाव्यं तन्ममात्रास्तु, स परं पुत्रकः कथम् । भविष्यतीति दुःखेनाभवज्जीवन्मृतेव सा ॥ ५९ ॥ तयाऽश्रूणि विमुञ्चन्त्या, स पृष्टो रुद्धकण्ठया ॥ हंहो सत्पुरुषाख्याहि, मत्पुत्रो विहितः कथम् ? ॥६०॥ स स्माह हृष्टचेता मे, मन्यसे यदि वाञ्छितम् । मेलयित्वा सुतं तत्ते, पूरयामि समीहितम् ॥ ६१ ॥ तं व्याघ्रदुरतटीन्याय, वीक्ष्य सात्मन्युपस्थितम् । मुनिवन्मौनमादाय, शीलरक्षाकृते स्थिता ॥ ६२ ॥ अनुकूलेन वातेन, प्राप बर्बरकूलकम् । कतिभिर्दिवसैर्यानपात्रं क्षेमेण तस्य तत् ॥६३॥ सर्वं भाण्डं समुत्तार्य, शुल्कदानपुरस्सरम् । बलसारस्ततो लग्नो, विधातुं क्रयविक्रयम् ॥६४॥ विक्रीता भूरिद्रव्येण, तेन सापि महासती । कृमिरागवस्त्रकरे, कारूणां निर्दये कुले ॥ ६५ ॥ तत्रापि दिव्यरूपा सा, प्रार्थिता कामहेतवे । कामान्धैर्युवभिः सामदामदण्डैरनेकधा ॥ ६६ ॥ तस्यास्तु चलितं चेतो, न कदापि मनागपि । एवंरूपा महासत्यो, भवन्ति भुवने यतः ॥ ६७ ॥ ततस्तैर्युवभिः क्रुद्धैस्तक्षं तक्षं वपुष्टरम् । तथा रुधिरमादायि, यथा मूर्च्छामवाप सा ॥ ६८ ॥ कारं कारमन्तराले, कतिचिद्दिवसान् पुनः । ततश्चुस्ते महापापा, रक्तार्थं तां सतीमिति ॥ ६९ ॥ साऽचिन्तयदहो पूर्वं, तद्दुष्कर्म्म मयाऽर्जितम् । उपर्युपरि दुःखाली, येनैवं ढौकते मयि ॥ ७० ॥

नाम्नी तयोरेवं, राजा राज्ञी च निर्वृतौ । स्मरन्तौ मलयां देवीं, तस्थतुस्तौ दिवानिशम् ॥८९॥ धात्रीभिः पञ्चभिर्नित्यं, लाल्यमाने उभे अपि । फले इवैकवृन्तस्यापत्ये ते वृद्धिमापतुः ॥ ९० ॥ यथा यथाऽहसच्छून्यमजल्पच्चास्फुटाक्षरम् । विसंस्थुलपदन्यासं, चक्रेऽपत्यद्वयं च तत् ॥९१॥ तथा तथा तयोः पित्रोर्ममौ हर्षो न मानसे । उदये रजनीजानेर्नी-रधेर्नीरपूरवत् ॥९२॥ लोकानां हस्ततो हस्ते, सञ्चरन्तौ शिशू क्रमात् । समारूढौ वयो रम्यं, सुखेनोत्तरमुत्तरम् ॥९३॥ पितृभ्यां योग्यतां ज्ञात्वा, समये तत्समर्पितम् । शस्त्रशास्त्रादिदक्षस्य, पण्डितस्य शिशुद्वयम् ॥ ९४ ॥ कुमारेण कुमार्या च, यथायोग्यं कलाः किल । गृहीताः स्तोककालेन, पूर्वाधीताः स्मृता इव ॥ ९५ ॥ अश्वेन कर्हिचित्क्रीडां, कदाचि-त्कुञ्जरेण च । कदाचिदसिना चक्रे, कुमारो धनुषाऽपि च ॥ ९६ ॥ यथा यथा स चिक्रीड, स्वैरमेवं तथा तथा । दुर्जनानां भ्रूसत्कारः, प्रमोदश्च सतां हृदि ॥ ९७ ॥ धात्रीवेगवतीमुख्यपरिवारसमन्विता । उद्यानादिषु चिक्रीड, कुमार्यपि यदृच्छया ॥ ९८ ॥ कारुण्यपुण्यहृदया मृदुमुग्धवाणी, प्राणप्रिया सकलबन्धुजनस्य दक्षा । बाल्योज्झिता मलयसुन्दरिनामधेया, सद्धर्मकर्मरसिका ववृधे कुमारी ॥ ३९९ ॥

॥ इति प्रथमः प्रस्तावः सम्पूर्णः ॥

एषा कल्पलता किं वा ?, चलाद्रेरुपरि स्थिता ॥ ८३ ॥ इत्येवं विविधां शङ्कां, जनयन्ती खचारिणी । जलक्षालित सर्वाङ्गी, ययौ सा मत्स्यसंस्थिता ॥ ८४ ॥ त्रिभिर्विशेषकम् । सुखं सुखमयं गच्छन्, मत्स्यः प्राप स पोतवत् । सागर-तिलकाख्यस्य, वेलाकूलस्य सन्निधौ ॥ ८५ ॥ इतश्चाधिपतिस्तस्य, वेलाकूलस्य निर्ययौ । कन्दर्पाख्यस्तदा राजपाटि-कायां जनैर्वृतः ॥ ८६ ॥ यावद्गजाधिरूढः स, समागादम्बुधेस्तटम् । अपश्यत्तावदायान्तं, तं मीनं नगरं प्रति ॥८७॥ तमारूढजनं मीनं, दृष्ट्वा सर्वेऽपि विस्मिताः । अपूर्वमिदमाश्चर्यं, दृश्यतेऽद्येति वादिनः ॥ ८८ ॥ गजारूढ इवायाति, हरिवद्गरुडस्थितः । क एष जलमार्गेणेत्यवदंस्ते परस्परम् ॥ ८९ ॥ राज्ञाऽभाण्यस्य मत्स्यस्य, मानुषस्यापि केनचित् । स्वैरमागच्छतो नैव, कार्यं किमपि भो भटाः ! ॥ ९० ॥ ततः कौतूहलाऽऽकृष्टाः, सर्वे मौनेन संस्थिताः । अपश्यन्मत्स्य-मायान्तं, व्यापारितविलोचनाः ॥ ९१ ॥ किञ्चिद्दूरेण लोकेभ्यस्तटमागत्य तेन सा । गृहीत्वा मृदु मत्स्येन, शुण्डाद-ण्डेन सुन्दरी ॥ ९२ ॥ मन्दं मन्दं जलाद्बाह्ये, शुद्धभूमौ विमुच्य ताम् । नत्वा च ववले मीनः, पश्यन् पश्चात्पुनः पुनः ॥ ९३ ॥ अदृश्यतां गते मीने, जनानां निम्नपाथसि । पार्श्वे मलयसुन्दर्या, नृपोऽगाद्विस्मिताशयः ॥ ९४ ॥ तमालोक्य व्रणाकीर्णामपि लावण्यसेवधिम् । नृपोऽवोचदियं तावत्, काचिन्नारी मनोहरा ॥ ९५ ॥ परमेवं प्रयत्नेन,

सर्वत्र, रोरभार्येव भूपते ! ॥ ८ ॥ ऊचेऽथ सेवकैर्देव !, दुःखभारेण भारिता । इष्टभ्रष्टा न शक्नोति, वक्तुमेषाऽत्र किञ्चन ॥ ९ ॥ न प्रष्टव्या ततः किञ्चित्, वचसापि सुखायितुम् । इयं युक्ताऽनुकम्पायाः, कार्योपकृतिरेव च ॥ ११० ॥ नृपः स्माह पुनर्भद्रे !, तथापि स्वां वदाभिधाम् । मन्दं मन्दं तयोचेऽहं, नाम्ना मलयसुन्दरी ॥ ११ ॥ ततो राज्ञा निजावासं, नीता सौख्यासनेन सा । संरोहणीरसेनाङ्गं, सज्जितं च सुखं सुखम् ॥ १२ ॥ विमुक्ताऽऽवास एकस्मिन्, दासदासीयुताऽथ सा । राज्ञा सन्मानयांचक्रे, वस्त्रालङ्करणैः स्वयम् ॥ १३ ॥ यद्येवं मामयं राजा, सत्करोति न तद्वरम् । ध्यायन्तीति सदा तस्थौ, सा धर्मध्यानतत्परा ॥ १४ ॥ अन्यदा भणिता तेन, मम भद्रे ! प्रिया भव । पट्टबन्धस्तवैव स्तादहं त्वादेशकारकः ॥ १५ ॥ कामार्थमिति तां भूपः, प्रार्थयामास मानुषैः । प्रकारान् सामदानादीन्, दर्शयद्भिरनेकधा ॥ १६ ॥ स्वयं राजा जगादाथ, प्रेम्णा मां मन्यसे यदि । तदा भव्यं यतः प्रेम, वरं लोके द्विपाक्षिकम् ॥ १७ ॥ अन्यथा कामयिष्येऽहं, सुन्दरि ! त्वां बलादपि । यतो मम मनो लग्नं, तव रूपेऽतिचारुणि ॥ १८ ॥ ततोऽसौ चिन्तयामास, प्रागेवेदृशचेतसा । अनेनाहं समानीता, तदद्य प्रकटीकृतम् ॥ १९ ॥ धिग् धिग् मे रूपचारुत्वं, पातालं यातु यौवनम् । असुना येन सर्वत्र, मया प्राप्ता कदर्थना ॥ १२० ॥ जलधौ

॥ १२ ॥ सम्यग्रूपपरावर्त्तकारकास्तेन भाषिताः । पुनः स्वरूपकर्त्तारो, योगराजा ज्ञजन्मनः ॥ १३ ॥ गृहीत्वाऽथ कुमारेण, प्रयुक्तास्ते यथाविधि । ज्ञातसत्त्वेन सत्कृत्य, विद्यासिद्धो व्यसर्जि च ॥ १४ ॥ सूरपालनृपेणाथ, प्रैषि तैर्मन्त्रिपौरुषैः । सार्द्धं श्रीवीरधवलपार्श्वे कार्येण केनचित् ॥१५॥ आपृच्छ्य पितरौ देशदर्शनाय कथञ्चन । कुमारोऽपि जगामैष, पुरीं चन्द्रावतीं वराम् ॥ १६ ॥ युग्मम् । प्राभृतानि पुरो मुक्त्वा, नत्वा च नृपमादरात् । उपविष्टा यथा-स्थानं, सर्वे तेऽमात्यपुङ्गवाः ॥ १७ ॥ पृष्टा चन्द्रावतीशेन, कुशलं सूरभूपतेः । प्रभौ राज्ये शरीरे च, ते सर्वेऽप्यकथन् शिवम् ॥ १८ ॥ पप्रच्छ वीरधवलो, राजा दृष्ट्वा महाबलम् । क एष लक्षणोपेतः, कुमारो मारविग्रहः ? ॥ १९ ॥ तेषामेकेन दक्षेण, नरेणाभाणि हे प्रभो ! । स्नेहेन च समायातो, ममैव लघुबान्धवः ॥ २० ॥ इत्यालापे कृते पूर्वं, राज्ञश्चन्द्रावतीपतेः । तैरात्मस्वामिनः सर्वः, कार्यसारो निवेदितः ॥ २१ ॥ ते सम्मान्य ततो राज्ञा, विसृष्टाः सूर-पूरुषाः । निजावासमनुप्राप्ताः, कुर्वाणास्तत्प्रशंसनम ॥ २२ ॥ महाबलकुमारोऽथ, बभ्रामाल्पपरिच्छदः । लोकलोचन-लोलैणवागुरा पूर्दिदृक्षया ॥ २३ ॥ इतस्ततो भ्रमन् सैष, स्वसौधान्तिकमागतः । तया मलयसुन्दर्याऽदर्श्यनङ्ग इवाङ्ग-वान् ॥ २४ ॥ तत्कालमाहता पञ्चबाणबाणैः समन्ततः । कुमारी चिन्तयामास, हर्षोल्लसितमानसा ॥ २५ ॥ अहो

न्दरी। बद्धकक्षा मृतौ तस्थौ, विच्छायमुखपङ्कजा ॥३३॥ स्वयं बभाण राजा स, भाणयामास वाऽपरैः। भोगार्थं तां सतीं सा तु, बिभिदे नैव किञ्चन ॥३४॥ यद्यद्वस्तु समायातमपूर्वं तत्तदर्पितम्। चित्तावर्जनकार्येण, तस्यै तेन महीभुजा ॥३५॥ अथान्यदा शुकस्यास्यात्, गच्छतः पुष्कराध्वनात् । एकमाम्रफलं पक्व, स्रस्तं भारेण सुन्दरम् ॥ ३६ ॥ उत्सङ्गे राज्ञ आकाशे, समासीनस्य पश्यतः । पतितं पाणिनाऽऽदाय, तेनैवं चिन्तितं पुनः ॥ ३७ ॥ कुतोऽत्र सम्भवश्चूत-फलानां मासि फाल्गुने। हुं ज्ञातं छिन्नटङ्कोऽस्ति, नगरं निकषा गिरिः ॥ ३८ ॥ तस्यातिविषमोत्तुङ्गशृङ्गसं-स्थात्सदाफलात्। रसालात् फलमादाय, समुड्डीनः शुकः किल ॥ ३९ ॥ भारेणाम्रमिदं कीरमुखात् स्रस्तं भविष्यति। स्वय खादाम्यदस्तत्किं, ददे कस्मै प्रियाय वा ? ॥ १४० ॥ ध्यात्वेत्यूचे स भोस्तस्यै, समर्प्यैदं कलं फलम् । तमा-नीयावरोधेऽद्य, मुञ्चताहं भजे बलात् ॥ ४१ ॥ इत्युक्त्वा प्रेषितास्तेन, गत्वा तत्र जनास्तु ते । तदाम्रमर्पयामासुः, सापि जग्राह विस्मिता ॥ ४२ ॥ प्राप्तं फलमकालेऽपीदं पुण्यैश्चिन्तयन्त्यदः । तैरानीयाऽवरोधे सा, क्षिप्ता मलयसुन्दरी ॥ ४३ ॥ ततस्तैः पुनरागत्य, राज्ञे सर्वं निवेदितम् । कृच्छ्रेणापालयद्राजाप्यागच्छन्तीं विभावरीम् ॥ ४४ ॥ अथ सा चिन्तयामास, सती मलयसुन्दरी । कन्दर्प्पोऽयं सकन्दर्पो, दर्पान्मां व्यथयिष्यति ॥ ४५ ॥ केशेभ्यो गुटिकां कृष्ट्वा,

मृदुतलौ पादावशोकपल्लवारुणौ । अहो कान्तिभरोऽप्यस्य, नखदर्प्पणसम्भवः ॥ २६ ॥ अहो करिकराकारं, जङ्घायुग्मं मनोहरम् । रम्भास्तम्भोपमावूरू, अहो पुंसोऽस्य सुन्दरौ ॥ २७ ॥ अहो कटीतटाभोगो, नाभेश्चाहो गभीरिमा । मुष्टिग्राह्यमहो मध्यं, त्रिवलीपरिशोभितम् ॥ २८ ॥ वक्षःस्थले विशालेऽस्य, धन्या काऽपि शयिष्यते । अतिदीर्घौ भुजादण्डौ, कस्याः कण्ठे लगिष्यतः ? ॥२९॥ तेजोभरेण दुष्प्रेक्षा, भान्ति पाणिनखा अमी । कृता दीपा दशान्याय-तमो हन्तुं दिशामिव ॥ ३० ॥ रेखास्तिस्रोऽस्य शोभन्ते, कण्ठे कम्बुसमाकृतौ । मनसः स्वच्छतां द्रष्टुं, सम्प्राप्तेव त्रिमार्गगा ॥ ३१ ॥ प्रवालदलसच्छायः, स्वच्छो भात्यधरोऽप्ययम् । मन्ये मां हृदयाद्द्रष्टुमनुरागो बहिःस्थितः ॥ ३२ ॥ कटरे सरला नासा, कपोलौ कामदर्प्पणौ । नेत्रे कर्णान्तविश्रान्ते, श्रवणौ स्कन्धसङ्गतौ ? ॥ ३३ ॥ श्यामः केश-कलापोऽस्य, राजते शिरसि स्थितः । नवशाड्वलतारुण्यवृक्षस्येव दलोच्चयः ॥ ३४ ॥ कुमारमिति पश्यन्ती, तं सर्वाङ्ग-मनोहरम् । चित्रन्यस्तेव सा यावत्, तस्थौ मलयसुन्दरी ॥ ३५ ॥ महाबलोऽपि तां तावत्, पश्यन् वातायनस्थि-ताम् । दध्यावित्यवतीर्णा किं, स्वर्गात्काऽपीयमप्सराः ? ॥ ३६ ॥ गाढानुरक्तया दृष्ट्या, पश्यन्ती मां पुनः पुनः । हरत्येषा मनो मे किं, परिणीताऽथवा कनी ? ॥ ३७ ॥ दध्यौ सापि कुमारीति, कस्यायं नन्दनः किल । कुमारो

लाघुना ॥५८॥ ततः पृष्टः स ना कीदृक्, त्वमात्मानं निवेदय । स स्माह यादृशोऽहं किं, न मां पश्यथ तादृशम् ॥५९॥
तं विद्याधरसिद्धादिलक्षणेभ्यो विलक्षणम् । सामान्यतरचिह्नालंकृतं धीरस्थिरान्तरम् ॥ १६० ॥ वेषं मलयसुन्दर्या,
दधतं तं तथैव च । पश्यन्नुवाच भूनाथो, हुंज्ञातमिति विस्मितः ॥ ६१ ॥ मद्वाञ्छितमनिच्छन्ती, भोस्त्वं !
मलयसुन्दरी । प्रतिपन्नाऽसि पुंरूपं, प्रकारेणात्र केनचित् ॥ ६२ ॥ रे नीत्वा बहिरावासे, तदेनं धत्त रक्षकाः ! ।
स्थितोऽत्रान्तःपुरेऽनर्थं, सकलेऽपि करिष्यति ॥ ६३ ॥ इत्युक्ते तेन नीत्वा स, पुमान् मलयसुन्दरी । धृतस्तैस्तत्र
हृष्टोऽस्थात्, धर्मध्यानोद्यतः सदा ॥ ६४ ॥ स कन्दर्पः सकन्दर्पः, क्ष्मापोऽप्यागत्य तं सदा । पप्रच्छोपचरन् भूरि,
परैश्चैवमपृच्छयत् ॥ ६५ ॥ नृरूपं किं त्वया चक्रे, ? प्रयोगेणेह केनचित् । स्वाभाविकं कथं रूपं, भविष्यति पुन-
स्तव ? ॥६६॥ किन्तु नोवाच किञ्चित्स, जितकासी ततो नृपः । रोषेणाताडयन्नित्यं, नानाताडनकर्म्मभिः ॥ ६७ ॥
ताड्यमानो भृशं सोऽथ, पुमान्मलयसुन्दरी । अध्यायद्यदतः स्थानात्, कथञ्चिन्निरसराम्यहम् ॥ ६८ ॥ ततो मुच्ये
महादुःखादतो नरकसोदरात् । कदाचिदन्यदा रात्रौ, प्रसुप्तो यामिकस्ततः ॥ ६९ ॥ ततो निःसृत्य सोऽज्ञात, आगतो
नगराद्बहिः । मर्तुकामः क्वचिद्देशे, कुड्यामेकत्र तास्थिवान् ॥ १७० ॥ त्रिभिर्विशेषकम् । नातिदूरेऽस्ति तस्यास्त्वन्धकूपो-

मेऽहरच्चित्तं, पश्यन् स्नेहलया दृशा ? ॥३८॥ उत्सुका सा ततो भूर्जे, लिखित्वा श्लोकयुग्मकम् । प्रसन्नं निजचित्तेन, सार्धं चिक्षेप तं प्रति ॥ ३९ ॥ कुमारेणापि तज्ज्ञात्वा, रोमाञ्चं दधता तनौ । कुमार्या सह हर्षेण, वाचितं निज-चेतसि ॥ ४० ॥ कोऽसि त्वं ? तव किं नाम ?, क्व वास्तव्योऽसि सुन्दर ? । कथय त्वयका जह्रे, मनो मे क्षिपता दृशम् ॥ ४१ ॥ अहं तु वीरधवलभूपतेस्तनया कनी । त्वदङ्कहृदयावर्त्तिनाम्ना मलयसुन्दरी ॥ ४२ ॥ ईक्षांचक्रे कुमारोऽथ, कन्यां मलयसुन्दरीम् । निर्निमेषाक्ष एकाग्रमानसो योगिराजवत् ॥ ४३ ॥ तयोस्तथा मिथो लग्ना, देहे दृष्टिर्यथा चिरात् । जतुयुक्तेन जम्बालकलितेवोत्पपात न ॥ ४४ ॥ लोचनान्येव जानन्ति, सम्बन्धं पूर्वजन्मनः । यतो हर्षं प्रिये दृष्टे, वहन्ति चाप्रिये रुषम् ॥ ४५ ॥ दृष्टिभ्यां दर्शिताध्वानावात्मानौ व्यत्यये स्थितौ । तयोः सिद्धः परपुरप्रवेशो ध्यानितां विना ॥ ४६ ॥ दृष्टी मेलयता तेनानुरागसूत्रधारिणा । तथा तौ मेलितौ सम्यग्, यथा सन्धिर्न लक्ष्यते ॥ ४७ ॥ कुमारोऽचिन्तयत्तावदेतया ज्ञापितो निजः । विदग्धयाऽनुरागो मे, सपरिच्छदयाऽपि हि ॥ ४८ ॥ इति ध्यायन् कुमारः स, यावत्तस्थौ सुनिश्चलः । तत्रागत्य पुमानेकस्तावत्तं प्रत्यभाषत ॥ ४९ ॥ कुमारालं विहारेण, नगर्या-मेहि मन्दिरम् । प्रयाणमधुना येन, भविष्यति पुरं प्रति ॥ ५० ॥ अहो मनोहरा एते, प्रासादा गोपुरान्विताः । अहो

॥ ८३ ॥ ततः सोऽस्फुटचैतन्यो, नरो मूर्च्छाभरार्दितः । मन्दं मन्दं जगादेति, शरणं मे महाबलः ॥ ८४ ॥ वि-
स्मितोऽथ कुमारः स, तस्याङ्गं समवाहयत् । मूर्च्छाभङ्गे ततः सोऽपि, चैतन्यं प्राप पूरुषः ॥ ८५ ॥ पुमान्मां किं स्मर-
त्येष, ? किं वा मन्नामकं परम् । किमपीष्टमिति ध्यात्वा, ततः प्रोचे महाबलः ॥ ८६ ॥ हे साहसिक ! कोऽसि त्वं, ?
किमित्थं पतितस्त्विह । उपलक्ष्य स्वेरणाथ, सम्यग् तेनेति भाषितम् ॥ ८७ ॥ कोऽसि त्वं ? कथमायातः, कूपे किं
पतितोऽनु माम् । प्रष्टव्योऽसीति पश्चान्नोः, प्रागेकं कुरु मे वचः ॥ ८८ ॥ स्वनिष्ठ्यूतेन मे भालतलं घर्ष यथा तव ।
पुण्यप्राप्यस्य वृत्तान्तं, स्वकीयं कथयाम्यहम् ॥ ८९ ॥ स्वनिष्ठ्यूतेन तेनापि, तस्य भालमघृष्यत । पुमान्सोऽथ
प्रिया तस्य, जज्ञे मलयसुन्दरी ॥ १९० ॥ इतश्च कूपभित्तेर्द्राग्, सर्पेणास्यं कृतं बहिः । उद्योतितोऽन्धकूपः स, तत्-
शिरोमणिना तदा ॥ ९१ ॥ दुष्प्रापात्मप्रियालोकोत्कण्ठितोऽथ महाबलः । अकस्मात्तां पुरोऽपश्यत्प्रियां मलयसुन्दरीम्
॥ ९२ ॥ अनभ्राहो ! महावृष्टिर्यद्येषा दृश्यसे प्रिये ! । भ्रामं भ्राममियत्कालं, नैव लब्धा कुतोऽपि या ॥ ९३ ॥
अहो विधेर्नियोगो यदित्थमत्रान्धकूपके । बभूवाचिन्तितोऽकस्मात्तवापि मम सङ्गमः ॥ ९४ ॥ जल्पन्नित्यादि मुञ्चं-
श्चाश्रूण्यश्रान्तं महाबलः । उवाचाऽऽमूलमाख्याहि, प्रिये ! वृत्तान्तमात्मनः ॥ ९५ ॥ साऽपि सर्वं स्ववृत्तान्तं,

वातायना रस्याश्चित्तमत्रैव मे स्थितम् ॥ ५१ ॥ ब्रुवन्निति कुमारोऽथ, पश्चाद्ग्रीवं पुनः पुनः । पश्यन्नावासमानीतस्तेन पुंसा कथञ्चन ॥ ५२ ॥ युग्मम् । दध्यौ कुमार औत्सुक्यादहो मम समर्थता । आत्मानमपि यत्तस्याः, प्रकाशयितुमक्षमः ॥ ५३ ॥ तया पृष्टं न शक्तोऽहमपि दातुं तथोत्तरम् । अहो कलासु नैपुण्यमहो विदग्धता मम ॥ ५४ ॥ अत्रागतोऽपि नाहं चेन्मिलिष्यामि तया सह । आवयोस्तत्कथं मेलः ?, पश्चात्तापः सदा मम ॥ ५५ ॥ तत्सञ्जाताऽधुना रात्रिस्तिमिरेण विजृम्भते । ततो यावज्जनोऽप्येष, प्रयाणप्रगुणो भवेत् ॥ ५६ ॥ प्रच्छन्नं तावदेकाकी, तत्र गच्छामि सम्प्रति । तस्या विरहखिन्नाया, मिलित्वा स्वं ब्रवीम्यहम् ॥ ५७ ॥ युग्मम् । ध्यात्वेति प्रगुणीभूय, निसृत्यालक्षितो निशि । कुमारीभवनाधस्तात्, कुमारः प्राप सत्वरम् ॥ ५८ ॥ प्राकारं तं समुल्लङ्घ्य, विद्युत्क्षिप्तानुकारिणा । करणेनाविशद्वेगात्प्रथमां सौधभूमिकाम् ॥ ५९ ॥ वसत्या तत्र कनकवत्या राजन्यभार्यया । अपरिच्छदयाऽदर्शि, कुमारः प्रविशन्निशि ॥ ६० ॥ धैर्येण कलितोऽपूर्वो, दिव्यरूपः क एष ना ? । कथं वात्र प्रविष्टोऽयं, द्वारपालेषु सत्स्वपि ? ॥ ६१ ॥ तन्नूनं खेचरः कोऽपि, नरः सत्त्वाधिकोऽथवा । प्रयोजनेन केनाऽपि, हृष्टचित्तः समेति किम् ? ॥ ६२ ॥ ध्यायन्तीति कुमारस्य, दिव्यरूपेण मोहिता । नरेन्द्रवल्लभा वक्तुं, प्रारेभे तं प्रतीति सा ॥ ६३ ॥ त्रिभिः कुलकम् ।

चिन्तयन्नित्यहं यावत्, कियतीं भूमिकां गतः । तावत्सर्पः स नष्टो द्राग्, ध्वान्तं चोल्लसितं भृशम् ॥ २६० ॥ ध्वान्तेऽप्यहं तथैवानुव्रजन्नास्फालितोऽश्मनि । ततः पादप्रहारेणाऽऽहताऽलं सा शिला मया ॥ ६१ ॥ द्वारमुद्घटितं तस्मात्, निर्गतेन मया बहिः । गर्भवासादिव प्राप्तं, पुनर्जन्मेति चिन्तितम् ॥ ६२ ॥ किञ्चिद्विश्वासमायातः, पश्यन्नहिपदं भुवि । गन्तुं लग्नः प्रिये ! सावधानचित्तोऽहमग्रतः ॥६३॥ कियद्गतेन दृष्टोऽहिः, शिलाकुण्डलितो मया । वशीकृतस्य मन्त्रेण, तस्यात्तश्च शिरोमणिः ॥६४॥ गिरिनद्याः सुरङ्गाऽत्र, यदेषा पितृकानने । चौरस्थानं तदेतद्धि, स परं तस्करो मृतः ॥६५॥ ध्यायतेति पुनर्द्वारं, सुरङ्गाया गतेन तत् । पिधाय शिलया मुक्तं, तथैव मयका प्रिये ! ॥६६॥ जानन्नप्यात्मनोऽनर्थं, नृपात्ते बिरहं पुनः । अनर्थसक्षमः सोढुं, प्रस्थितोऽहं पुरं प्रति ॥६७ ॥ आगां चात्र पुरे यावत्तावत् शुश्राव डिण्डिमम् । मामिवाकारयन्तं त्वां, सज्जीकर्तुं विषाकुलाम् ॥ ६८ ॥ पृष्ट्वा ज्ञात्वा च वृत्तान्तं, लोकात्ते डिण्डिमो धृतः । मणिना तेन सर्पस्य, मया त्वं सज्जिता प्रिये ! ॥ ६९ ॥ मयैषोऽपि नृपो वाक्यसङ्कटे पातितोऽस्ति यत् । कर्त्तव्या न त्वया काचिदनिवृत्तिस्ततः प्रिये ! ॥ २७० ॥ निस्सन्देहमयं त्वां मे, वितरिष्यति वल्लभे ! । सुधासिक्तेव संजज्ञे, ततोऽसौ निर्वृता भृशम् ॥ ७१ ॥ अथाहूतः कुमारेण, राजाऽऽयातो विलोक्य ताम् । उपविष्टां प्रजल्पन्तीं,

भो भो नरोत्तमागच्छ, त्वमास्वात्रासने वरे । मां मानयस्व निःशङ्कं, मम पूरय वाञ्छितम् ॥ ६४ ॥ कुमारश्चिन्तयामास, किमेषा राजवल्लभा ? । राजस्वसाऽथवा नूनं, राज्ञ्येवेयं विचार्यते ॥ ६५ ॥ यद्यात्मा मुच्यते स्वैरं, प्रविष्टैः स्थान ईदृशि । नारीभिर्मुह्यते ब्रह्मव्रतं स्वस्य च खण्ड्यते ॥ ६६ ॥ तदा समीहितं कार्यं, साध्यते नोत्तमैर्नरैः । इति निश्चित्य हृदये, कुमारस्तामभाषत ॥ ६७ ॥ युग्मम् । योग्यं मलयसुन्दर्या, लात्वाऽहं किञ्चिदागतः । तद् ब्रूहि सत्वरं राज्ञः, सा कन्या कुत्र तिष्ठति ? ॥ ६८ ॥ पश्चाद् भणिष्यसि त्वं यत्, करिष्येऽहं तदेव हि । इत्युक्ते दर्शितो मार्ग, ऊर्ध्वभूमेस्तदा तया ॥ ६९ ॥ ऊर्ध्वभूमिं समारूढे, कुमारे सा नृपप्रिया । अनुगम्य स्थिता द्वारे, प्रच्छन्ना शृण्वती वचः ॥ ७० ॥ ययौ यावत्कुमारः सः, कुमारीवासवेश्मनि । तावद्ददर्श तां बालां, विन्यस्तास्यां कराम्बुजे ॥ ७१ ॥ तत्रैवासन आसीनां, पश्यन्तीं तां दिशं मुहुः । एकाग्रमानसां किञ्चित्, ध्यायन्तीं श्यामलाननाम् ॥ ७२ ॥ कुमारेण ततः प्रोक्तमितः पश्य मृगेक्षणे ! । सोऽहं पुरोऽत्र तिष्ठामि, निःसृत्य हृदयात्तव ॥ ७३ ॥ निशम्य वलितग्रीवं, सुधासममिदं वचः । तं दृष्ट्वा सा ह्रिया जज्ञे, हसन्ती द्रागधोमुखी ॥ ७४ ॥ कुमारेणोदितं चित्तसर्वस्वं मे त्वयाऽर्पितम् । श्लोकयुग्मेन यत्पृष्टं, मत्स्वरूपं च तत् शृणु ॥ ७५ ॥ पृथ्वीस्थानपुरे रम्ये, सुरपालनरेशतुः । देवी-

लुब्धोऽयं मां जिघांसति । प्रागेव याचितोऽनेन, क्षुद्रादेशानहं ततः ॥ ८५ ॥ ततोऽयमकृते कार्ये, भार्यां मे नार्पयिष्यति । कार्यं पुनर्विना मृत्युं, कर्तुं शक्यं न केनचित् ॥ ८६ ॥ इति ध्यात्वा चिरं तेन, समालम्ब्य च साहसम् । ऊचे नरेन्द्र ! चिन्तेयं, कर्त्तव्या क्वापि न त्वया ॥ ८७ ॥ मया सम्पाद्यते तत्तेऽप्यातिदुर्लभमौषधम् । समर्प्य मे परं भार्यां, राज्यं कुर्याश्चिरं पटुः ॥ ८८ ॥ मिथ्या विहस्य सोऽवोचत्, चित्ते दुष्टो नृपस्ततः । महोपकारिणे सिद्ध !, दातव्या ते प्रिया मया ॥ ८९ ॥ तयोः प्राहरिकान् मुक्त्वा, जायापत्योः पृथग् पृथग् । हृष्टचित्तः स पापिष्टः, क्ष्मापोऽगान्निजमन्दिरम् ॥२९०॥ प्रास्थापयत्कुमारोऽथ, श्मशाने काष्ठसञ्चयान् । लोकोऽप्यूचे मुधा हाहा, नररत्नं विनङ्क्ष्यति ॥९१॥ विहितान्तिमशृङ्गारो, वेष्टितो राजपौरुषैः । दिनस्य पश्चिमे यामे, श्मशानं प्राप भूपतिः ॥ ९२ ॥ ज्ञात्वा व्यतिकरं लोकादूचे मलयसुन्दरी । धिग् धिग् जन्म धिग् धिग् च, सौन्दर्यं वपुषोऽखिलम् ॥९३॥ येनैतस्य कुमारस्य, पुंरत्नस्य महौजसः । सर्वत्राप्यहमेवात्र, जाताऽनर्थस्य हेतवे ॥ ९४ ॥ पुरा नाथ ! त्वमुत्तीर्णः, सदैवापन्महार्णवात् । एतस्यामापदीदानीं, पुनः स्थास्यसि मध्यतः ॥ ९५ ॥ धृत्वा राजभटैः क्षिप्तश्चिताकाष्ठेषु वल्लभ ! । प्रज्वलितेऽनले विष्वग्, निर्यास्यसि कथं कथम् ? ॥ ९६ ॥ एतस्त्वं किमिह स्वामिन्ममाथ मिलितः किमु ? । त्वयात्रैत्याहिना दष्टा, पापाहं जीविता

पद्मावतीजातः, पुत्रो नाम्ना महाबलः ॥ ७६ ॥ देशस्य दर्शनायात्र, परिवारसमन्वितः । सर्वामलकलावास, आगतोऽहं वरानने ! ॥ ७७ ॥ इमामाश्चर्यसम्पूर्णां, नगरीं च विलोकयन् । तव प्रासादमूलेऽत्र, प्रदेशे यावदागमम् ॥७८॥ यावत्तव ममाप्येष, सञ्जातो दृष्टिमेलकः । दर्शयन् कमपि स्नेहं, मिथो जन्मान्तरोद्भवम् ॥ ७९ ॥ अतः परञ्च यज्जातं, तदत्र प्रकटं तव । प्रविश्य सङ्कटेऽप्यत्र, मिलितोऽस्मि तवाधुना ॥ ८० ॥ तदहं यामि येनाशु, प्रयाणं सम्भविष्यति । परिवारजनः सर्वो, मुक्तः सज्जीभवन्मया ॥ ८१ ॥ सोचे सुभग ! गन्तव्यं, न त्वया स्थेयमत्र तु । तवादर्शनतो येनाहं प्राणान् धर्त्तुमक्षमा ॥ ८२ ॥ यदि यास्यसि चेत्त्वं मामवज्ञायातिनिष्ठुरः । त्वया सुभग ! दातव्यस्तन्मे प्राणजलाञ्जलिः ॥ ८३ ॥ तत्प्रसीदात्र तिष्ठ त्वं, सम्पूरय ममेप्सितम् । यावत्पश्याम्यहं त्वां मे, तावत् सुभग ! निर्वृतिः ॥ ८४ ॥ अन्यच्चाहमिहातिथ्यं, किङ्करोमि कुमार ! ते ? । एकं तावन्मया तुभ्यमाजन्मात्मा समर्पितः ॥ ८५ ॥ लक्ष्मीपुञ्जमिमं हारं, गृहाण त्वं द्वितीयकम् । जल्पन्तीति निचिक्षेप, हारं कण्ठेऽस्य सा निजम् ॥८६॥ उवाच च मया हारमिषादेषा गले तव । प्रक्षिप्ता च वरमाला, तद्गन्धर्वोद्वाहमातनु ॥ ८७ ॥ त्वया सार्द्धमहं पश्चादागमिष्यामि सुन्दर ! । वियोगजनितं दुःखं, मा भूत्कर्हिचिदावयोः ॥ ८८ ॥ कुमारेण ततः प्रोचे, युक्तमुक्तं त्वया-

॥ ९ ॥ अन्यायकूटवसते !, हंहो धूर्त्तशिरोमणे ! । हतो मज्जनकस्तावत्, जीवो मन्त्रीश्वरस्त्वया ॥ १० ॥ अस्माकं पश्यतां राज्ञो, दुःखावस्थाप्यसौ कृता । भविष्यतीह किं किं न, ततस्त्वत्तोऽसमञ्जसम् ? ॥ ११ ॥ इतश्चाकर्ण्य वृत्तान्तं, तं सर्वमपि भूपतेः । भीतास्तत्राययुर्भूपभार्याः सर्वा अपि द्रुतम् ॥ १२ ॥ दृष्ट्वा ताः स्वामिनं दुःस्थमपूर्वाकारधारिणम् । प्रक्षिपन्त्यो मुखे पञ्चाप्यङ्गुली रोदनान्विताः ॥ १३ ॥ इति दीनस्वरेणैव, सिद्धस्याभिमुखं जगुः । कोपं मुञ्च प्रसीदाशु, सुसाधोऽस्मासु सम्प्रति ॥१४॥ यादृशोऽभून्नृपो मूर्त्या, तादृशं कुर्वमुं पुनः । अस्मभ्यं पतिभिक्षां त्वं, देहि कारुण्यसन्दिर ! ॥१५॥ त्रिभिर्विशेषकम् । प्रत्यक्षं सर्वलोकानामेष दुःखं हि संगतः । परिणामं निजं दुष्टं, त्यक्ष्यतीति विचिन्तयन् ॥१६॥ सिद्धो जगाद यद्येष, स्वपादाभ्यां पुराद्बहिः । संस्थितं जिनमानम्य, पुनरागच्छतीह च ॥१७॥ सज्जिताङ्गस्तदेष स्यात्, पतिर्वो नान्यथा पुनः । ततोऽशक्तोऽपि भूपः स, तत्र गन्तुं प्रचक्रमे ॥ १८ ॥ त्रिभिर्विशेषकम् । कौतूहलेन पूर्लोके, चटितेऽट्टगृहादिषु । स्थाने स्थाने तथा पुञ्जीभूते भूपश्चचाल सः ॥ १९ ॥ ऋजुपादाभ्यामचालीच्चापश्यन्निगमं ततः । पदे पदेऽपतन्राजा, दुःखेन महता ययौ ॥ ४२० ॥ विपरीताङ्गः पादेन, पश्यन्मार्गं चचाल सः । ययौ तथापि दुःखेन, प्रेरणाभ्यां विडम्बयन् ॥ २१ ॥ द्वाभ्यामपि प्रकाराभ्यां, जनयन्निति कौतुकम् । केषां दुःखं

ऽखिलम् । स्वकीयचित्तसंकल्पः, साधु साधु निवेदितः ॥ ८९ ॥ परं न जनप्रत्यक्षं, पितृभ्यामिह दीयते । यावत्कन्या कुलीनानां, तावद्वोढुं न साम्प्रतम् ॥ ९० ॥ मा स्म ताम्यः शुभे त्वं तन्, मा भूश्चोत्सुकमानसा । तिष्ठ निर्वृतचित्ताऽत्र, सुखेन कति वासरान् ॥ ९१ ॥ बुद्धिं तथा तथा धास्ये, यतिष्येऽहं तथा तथा । यथा दत्तां पितृभ्यां त्वां, परिणेष्याम्यहं ननु ॥ ९२ ॥ विशालाक्षि! प्रतिज्ञैषा, मया चक्रे पुरस्तव । सुप्रसन्नाऽधुना भूत्वा, त्वं मां विसृज सुन्दरि ! ॥ ९३ ॥ तदा कनकवल्या तु, प्रच्छन्नं द्वारभूस्थया । तयोर्व्यतिकरः सम्यगेष दृष्टः श्रुतः पुनः ॥९४॥ क्रुधा साऽचिन्तयन्नूनं, कोऽप्येष विप्रतार्य माम् । कृतसङ्केतको वीरः, कुमारीपार्श्वमभ्यगात् ॥ ९५ ॥ द्वारं पिधाय सहसा, तया दत्तं च तालकम् । ददती तालकं दृष्टा, सा ताभ्यां च दुराशया ॥९६॥ कुमार्योक्तमियं मातुः,सपत्नी जननी मम । नाम्ना कनकवल्यत्र, सौधाधोभुवि वासिनी ॥९७॥ एतया छन्नया द्वारे,स्थित (द्वारस्थित्या) या व्यतिकरः श्रुतः? । वीक्षितश्चावयोः सर्वो, दत्तं तेनेति तालकम् ॥९८॥ तदेषा कुपिता किञ्चिदनर्थं चालयिष्यति । न ज्ञाता हा मयाप्येषा, सपत्नी मातुरागता ॥ ९९ ॥ कुमारः स्माह कामार्थमागच्छन् प्रार्थितोऽनया । किन्तु कूटोत्तरं कृत्वाऽहमायातोऽत्र सुन्दरि ! ॥ १०० ॥ मम पृष्ठिविलग्नेयं, नूनं हेरितुमागता । अस्मद्व्यतिकरं दृष्ट्वा, जाता कोपपरा तथा ॥ १ ॥ जल्पन्तावित्यभूतां तौ,

तथा। क्षणमात्रेण सिद्धः स, निर्ययौ ज्वलनात्ततः ॥ ३५ ॥ वासवाश्वोपमाश्वाधिरूढोऽत्यन्तवपुर्महान्। संवीत-
दिव्यवसनः, सर्वालङ्कारभासुरः ॥ ३६ ॥ जनयन् विस्मयं सिद्धो, वक्तुमेवं प्रचक्रमे। ददद्धर्षविषादौ
च, व्यत्ययाल्लोकभूपयोः ॥ ३७ ॥ अहो एषा ज्वलद्वह्निः, पवित्रा सर्वकामदा। भूमिर्यत्पतितोऽत्राहमश्वोऽप्येवं-
बभूव च ॥ ३८ ॥ आवयोर्न कदापीह, रुग्जरा च मृतिस्तथा। भविष्यत्यन्यदप्यत्र, प्रविष्टैरिष्टमाप्यते ॥ ३९ ॥
ततस्तत्र प्रवेशाय, राजाऽन्येऽपि समुद्यताः। सिद्धेनोक्तं ततो भो भोः!, क्षणमेकं विलम्ब्यताम् ॥४४०॥ पूजयास्यनलं
यावत्, विधिवत्तीर्थमप्यथ। आनाय्याज्यादि चिक्षेप, कूटमन्त्रपुरस्सरम् ॥ ४१ ॥ अहं पूर्वं प्रवेक्ष्यामी-
त्युक्त्वा ध्यात्वा च वाञ्छितम्। प्राविशत्सहसा राजा, सचिवोऽपि ततो द्रुतम् ॥ ४२ ॥ कुमारो वारयामास, सर्वान्
प्रविशतः परान्। विलम्ब्यतां क्षणं राजमन्त्रिनिर्गम ईक्ष्यताम् ॥ ४३ ॥ न निर्गतौ चिरेणापि, यावत्तौ तावदूचिवान्।
यथाऽत्र किं जनः सिद्ध!, नायातौ नृपमन्त्रिणौ! ॥ ४४ ॥ सोऽवोचज्ज्वलनात्किं भोः, कदाचित्कोऽपि निर्गतः?। अहं
तु कृतसांनिध्यः, सन्तुष्टेन सुपर्वणा ॥ ४५ ॥ जनो जगाद हुं ज्ञातं, वैरं स्वं वालितं त्वया। फलितोऽन्यायवृक्षोऽयं,
सपुत्रामात्यभूपयोः ॥ ४६ ॥ सामन्ताद्यैस्ततस्तत्र, मन्त्रयित्वा महानरैः। स राज्यार्हः परे राज्ये, सिद्ध एव कृतो नृपः

ततः सर्वं, श्रीवीरधवलान्तिके ॥ ४६० ॥ गच्छतार्द्धपथे तेन, रौद्राटव्यामुभावपि । प्राप्तौ श्रीवीरधवलसूरपाला-
भिधौ नृपौ ॥ ४६१ ॥ द्वयोरपि तयोर्येन, राज्ञोर्लोकमुखान्मृषा । शुद्धिर्मलयसुन्दर्या, प्राप्ता युगपदीदृशी ॥ ६२ ॥
रौद्राटव्यां यतो दुर्गं, तिलकाख्यमहागिरौ । भीमपल्लीपतेः पार्श्वेऽस्ति सा मलयसुन्दरी ॥ ६३ ॥ स्वस्वराज्यात्ततस्तत्रा-
यातौ द्वावपि भूपती । ताभ्यां पल्लीपतिः सोऽथ, लीलया दुर्जयो जितः ॥ ६४ ॥ वीक्षिता तत्र सर्वत्र, ताभ्यां मलय-
सुन्दरी । किन्तु तस्याः पदमपि, दुर्लभाया अलाभि न ॥ ६५ ॥ नरेन्द्रौ तौ ततो यावद्यास्यतः स्वपुरं प्रति । तावत्सो-
मेन विज्ञप्तः, श्रीवीरधवलो नृपः ॥६६॥ तथा तथोदितं सर्वं, बलसारस्य वाचिकम् । राज्ञा वीरधवलेन, द्रुतमङ्गीकृतं
यथा ॥ ६७ ॥ तेनार्द्धे यच्छताऽऽख्यातं, सूरपालाय भूभुजे । सर्वं बहुमतं तेनाप्युल्लसल्लोभवार्द्धिना ॥ ६८ ॥ सदावयो-
रिदं वैरिगेहं किमपि तं नवम् । हत्वाऽमुं नृपमेतस्य, सर्वस्वं गृह्यतेऽधुना ॥ ६९ ॥ मन्त्रयित्वेति तौ सिद्धराजस्योपरि
भूपती । असङ्ख्यबलसंयुक्तौ, प्रचेलतुरुभावपि ॥ ४७० ॥ प्राप्तौ सागरतिलकपुरादारान्नरेश्वरौ । कम्पयन्तौ भुवं
सैन्यभारैः कातरचित्तवत् ॥ ७१ ॥ दत्त्वा शिक्षां ततो दूतस्ताभ्यां प्राक् प्रहितो हितः । सागरतिलकाख्यस्य,
नगरस्य नरेशितुः ॥ ७२ ॥ दूतस्तत्र गतो द्वारपालेनान्तः प्रवेशितः । कृत्वा प्रणाममेवं तं, सिद्धराजं व्यजिज्ञ-

यातः स ईक्षताम् ॥ १४ ॥ श्रुत्वा कनकवत्यास्तद्, वाक्यं भूपतिसूनुना । स तथोल्लासितो हारो, यथा दृष्टोऽखिलै-
र्जनैः ॥ १५ ॥ ततो व्यावृत्य ते सर्वे, स्वं स्वं स्थानं ययुः क्षणात् । दध्यौ कनकवत्येवं, सविषादा स्वचेतसि ॥ १६ ॥
क्व गतः स कथं जातः?, कुमारो यो मयेक्षितः । किं मे हताशमनसः, सञ्जातः कोऽपि विभ्रमः? ॥ १७ ॥ हाहाऽहं
निन्दिता सर्वैर्विख्याता कूटभाषिणी । तदेतस्याः कुमार्या मे, लघुता भवतीदृशी ॥ १८ ॥ वैरिणी प्राग्भवस्यैषा, नूनं
मलयसुन्दरी । गच्छन्ती भाषमाणाऽपि, ममोद्वेगं करोत्यलम् ॥ १९ ॥ कदा कथं महानर्थे, पतिष्यति मरिष्यति । कदा
चैषेति कनकवत्यस्थाच्चिन्तयत्यलम् ॥ १२० ॥ मुखादाकृष्य गुटिकां, कृत्वा रूपं निजं ततः । कुमारः स्माह तन्वङ्गि!,
गुटिकावैभवं ह्यदः ॥ २१ ॥ तिष्ठतोऽत्र पुनः किञ्चित्, विरूपं मे भविष्यति । द्रुतं तद् याम्यहं त्वं तु, तिष्ठेः स्वस्था-
ऽत्र सुन्दरि! ॥ २२ ॥ आवयोरनुकूलोऽस्ति, विधिः सम्प्रति वेद्म्यहम् । संयोगो दुर्लभो यस्मादेषोऽभूदवितर्कितः
॥ २३ ॥ करिष्यति स एवेदं, कार्या चिन्ता त्वया नहि । श्लोकोऽयं सर्वदा ध्येयश्चित्तस्वास्थ्यविधायकः ॥२४॥ विधत्ते
यद्विधिस्तत्स्यान्न स्यात् हृदयचिन्तितम् । एवमेवोत्सुकं चित्तमुपायान् चिन्तयेत् बहून् ॥ २५ ॥ टङ्कोत्कीर्ण इव
श्लोको, लग्नस्तस्या अयं हृदि । स्वशिरो धुन्वती तस्थौ, तत एषा मृगेक्षणा ॥ २६ ॥ शिवास्ते सन्तु पन्थानः, कुमारे-

च गूढहृत् ॥ ८६ ॥ हर्षेण प्रोल्लसद्रोमा, रसेनेव रणोद्भवा । कृत्रिमाटोपसंयुक्तो, दूतं प्रति जगाविति ॥ ८७ ॥ युग्मम् । यदि दूत! प्रभू ते तौ, बहुसैन्यावुभावपि । तत्किं न द्विभुजौ नैकदेहौ किं वा नरौ न किम्? ॥ ८८ ॥ रविरेकोऽपि ताराणां, माहात्म्यं ग्रसते न किम्? । गजेन्द्राणां न किं दर्पं, हरत्येकोऽपि केसरी ॥ ८९ ॥ अभीष्टोऽपि सुतो दुष्टः, शिक्ष्यते न्यायिभिर्न किम्? । किं चेष्टो भवतामेषः, यद्यस्माकं ततः किमु? ॥४९०॥ बलिभिः कलितौ मूर्ध्नि, पलितौ न्यायवादिनौ । त्वदीशौ मोचयन्तौ तं, लज्जेते नापराधिनम् ॥ ९१ ॥ स्वीकृतान्यायपक्षौ तौ, कीदृशौ युधि मे पुरः । प्रदत्तोलूकसञ्चारनिशातिमिरवद्द्रवेः ॥ ९२ ॥ विक्रामति हरौ कीदृग्, स्फुरणं हरिणीशिशोः? । विद्युत्पाते परित्राणं, किं वृक्षेण गृहेण वा? ॥ ९३ ॥ शिक्षणीयोऽत्र रङ्कोऽथ, राजाऽप्यन्यायतत्परः । राजधर्मोऽन्यथा कीदृगस्माकं न्यायकारिणाम् ॥ ९४ ॥ त्वत्स्वामिनोस्तदन्यायवतोर्नस्तातिलीनयोः । कर्त्तव्यास्ति रणे शिक्षा, द्राग् कौशेयकसाक्षिका ॥ ९५ ॥ रणाजिरे तयोः सर्वान्, चिन्तितार्थान् मनोरथान् । पूरयिष्यामि हे दूत!, राज्ञोः सपरिवारयोः ॥ ९६ ॥ तद्याहि सज्जयस्वैतौ, प्राप्तश्चाहमिति ब्रुवन् । शीघ्रं साङ्ग्रामिकीं ढक्कां, ताडयामास सिद्धराट् ॥ ९७ ॥ कथयित्वा रहस्यं तत्, राज्ञी मलयसुन्दरी । आज्ञादानेन तत्रैवा-

घूघूयमानशैलौघे, खड्गखाट्कारदारुणे ॥ ११ ॥ मूर्च्छच्छुरीछणत्कारे, दण्डभाट्कारभीषणे । त्रटत्रटिति कुर्वाणे, तनुत्राणगणे रणे ॥१२॥ कम्पिताः कातराः कामं, सूराश्चोल्लसिता भृशम् । उध्धूषिताङ्गरोमाणः, कृतपक्षा इवाजये ॥१३॥ त्रिभिर्विशेषकम् । खड्गाखड्गि क्वचित्तत्र, दण्डादण्डि शराशरि । कुन्ताकुन्ति तथा क्वापि, प्रावर्त्तत गदागदि ॥१४॥ केशाकेशि तथा क्वापि, दन्तादन्ति लतालति । मुष्टामुष्टि तथा क्वापि, मुद्गरामुद्गरि क्वचित् ॥ १५ ॥ वर्त्तमाने रणेऽत्रैवं, क्षयकालकरालभृत् । सिद्धराजबलं भग्नं, स्तोकत्वाद् वलितं ततः ॥ १६ ॥ रणरङ्गगजारूढः, स्थिरीकुर्वन्निजं बलम् । हक्कया त्रासयन्नन्यान्, भटान् सङ्ग्रामलम्पटान् ॥ १७ ॥ सिद्धराजस्ततो वेगात्, स्वयं योद्धुं प्रचक्रमे । सूरपालस्तथा विश्वालङ्कारगजसंस्थितः ॥ १८ ॥ त्रिभिर्विशेषकम् । सङ्ग्रामतिलकं नाम, गजमारुह्य तत्क्षणम् । श्रीवीरधवलोऽप्युच्चैः, प्रहर्त्तुमुपचक्रमे ॥ १९ ॥ सिद्धराजस्मृतोऽप्याशु, स त्वासो व्यन्तरामरः । आत्मानं ज्ञापयित्वा च, सहायं कर्तुमुद्यतः ॥ ५२० ॥ आयन्ति परशस्त्राणि, गृहीत्वाऽर्द्धपथेऽपि सः । अर्पयामास गीर्वाणः, सिद्धराजाय सत्वरम् ॥ २१ ॥ शरासारं तदा मुञ्चन्, सिद्धराजो घनाघनः । सर्वानुड्डाययामास, राजहंसान् रणाङ्गणे ॥ २२ ॥ चिच्छेद कौतुकेनैष, क्षुरप्रैः सायकैस्तयोः । चामराणि पताकाश्च, छत्रचिह्नानि लीलया ॥ २३ ॥ करात्तानि च

तन्निमित्तं स्वयंवरे । सर्वतः प्रहिता दूता, आह्वातुं नृपनन्दनान् ॥ १४० ॥ युष्मत्पार्श्वे त्वह देव !, प्रेषितोऽस्मन्महीभुजा । महाबलं कुमारं तमाह्वातुं रूपदर्पकम् ॥ ४१ ॥ अद्यास्ति ज्येष्ठमासस्य, कृष्णैवैकादशी तिथिः । आगामिन्यां चतुर्दश्यां, भवितैष स्वयंवरः ॥ ४२ ॥ प्रेषितस्य ममाभूवन्, वासरा बहवः परम् । मन्दीभूतोऽन्तरालेऽहं, विलम्बस्तेन हेतुना ॥ ४३ ॥ अतः प्रसीद देवाशु, कुमारं प्रेषयाधुना । विलम्बः सहते नैव, यतो लग्नं समीपगम् ॥४४॥ हृष्टचित्तस्ततो राजा, सर्वं स्वीकृत्य तद्वचः । वस्त्रादिभिश्च सत्कृत्य, दूतं प्रेषितवान् पुनः ॥ ४५ ॥ कुमारोऽपि सभासीनः, सर्वमाकर्ण्य तद्वचः । प्रमोदापूर्णहृदयश्चिन्तयामासिवानिति ॥ ४६ ॥ कटरे कटरे पुण्यं ( मया स्वकीयचित्ते च ) यद्ध्यातं जातमेव तत । इतः क्षुधासमुल्लास, इतः स्थालेऽपतत् सिता ॥ ४७ ॥ सामर्थ्येनापि चार्थेन यत्कार्यं संशयस्थितम् । तदहो दैवयोगेन, मुष्टिमध्ये समागतम् ॥ ४८ ॥ चिन्ताभारः कियानेषः, मूलात् झटिति निष्ठितः । प्रनष्टो दुष्ट ( दुःख ) सञ्चारः, पूर्णं तोषेण मानसम् ॥ ४९ ॥ सिद्धं विंशोपकान् कार्यं, यावदेकोनविंशतिम् । कटरे पुण्यमाहात्म्यमनुकूलो ह हा विधिः ॥ १५० ॥ तातादेशेन गत्वाऽहं, परिणेष्यामि तत्र ताम् । कृतार्थश्च भविष्यामि, कुमारानवमत्य तान् ॥ ५१ ॥ इति हर्षाकुले तस्मिन्, कुमारे प्रक्षिपन् दृशम् । राजा जगाद

सैन्याद् विज्ञपयत्यदः ॥३६॥ युग्मम्। युष्मत्प्रसादतोऽत्रैव, प्राप्तराज्यपरिग्रहः । दर्शिताऽऽत्मीयदोर्दण्डवीर्यः पूज्यमनोमुदे ॥३७॥ अकुण्ठोत्कण्ठया तातपादानां सुचिरादहम् । सुकृतेन मिलन्नस्मि, विषादो वां ततः कथम्? ॥३८॥ युग्मम्। इति विज्ञातलेखार्थाः, सर्वे ते राजसैनिकाः । प्रमोदमेदुरस्वान्ताः, बभूवुस्तत्क्षणादपि ॥ ३९ ॥ अहो विधेः प्रसन्नत्वमहो पुण्यानि नोऽधुना । यत्प्रियासहितो वत्सो, मिलिष्यति महाबलः ॥ ५४० ॥ निर्गता नरकादद्य, वयमद्यैव जीविताः । अस्माकमद्य चैतन्यमद्य चोन्मीलिता दृशः ॥ ४१ ॥ जल्पन्निति समं वीरधवलेन महीभुजा । सूरपालो महाराजोऽभिययौ तं महाबलम् ॥ ४२ ॥ सिद्धराजोऽपि संवीक्ष्यागच्छन्तौ तौ गुरू ततः । जगामाभिमुखं मङ्क्षु, निस्सीमविनयान्वितः ॥ ४३ ॥ त्रयोऽपि मिलितास्तेऽथ, वैरिभावे गतेऽखिले । अन्तरस्थे हृते बन्धे, प्रवाहाः पयसामिव ॥ ४४ ॥ मिथः प्रकाशितः स्नेहो, बाष्पाविलविलोचनैः । तैः स कोऽपि न यो वक्तुं, शक्यते निपुणैरपि ॥ ४५ ॥ ततस्तौ सिद्धराजेन, निजं द्रङ्गं प्रवेशितौ । नृपौ स्वस्वपरीवारयुतौ नीतौ नृपालये ॥ ४६ ॥ रुदती दुःखसंस्मृत्या, राज्ञी मलयसुन्दरी । बहुधाऽऽलापिता तत्र, श्वशुरप्रमुखैर्जनैः ॥ ४७ ॥ कारिताः सिद्धराजेन, भोजनादिक्रियास्ततः । ते सर्वे निर्वृता जाता, जनकश्वशुरादयः ॥ ४८ ॥ पृष्टे पित्रादिभिः सर्वो, वृत्तान्तः कथित-

हे वत्स!, गच्छ त्वं द्राग् स्वयंवरम् ॥ ५२ ॥ निश्चयैव प्रयाहि त्वं, रथोद्दामबलान्वितः । मान्योऽस्माकं यतो वीरधवलोऽसौ महान्नृपः ॥ ५३ ॥ संयोज्याथ करौ शीर्षे, कुमारो नमयन्निजम् । उवाचेति प्रमाणं मे, तातादेशः प्रमोदकृत् ॥ ५४ ॥ सज्जीभवति सैन्येऽथ, गमनाय नृपाज्ञया । राज्ञोचे वत्स! तं हारं, गृहाण सह सुन्दरम् ॥ ५५ ॥ कुमारेण ततोऽभाणि, न जाने तात! कारणम् । अलक्ष्यः कोऽपि निद्राणमुपद्रवति मां निशि ॥ ५६ ॥ कदाचिद् हरते वस्त्रं, शस्त्रं वाऽऽभरणं तथा । कदाचिद्रौद्रशब्देन, सोऽट्टहासञ्च मुञ्चति ॥ ५७ ॥ लक्ष्मीपुञ्जो मया हारो, गृहीतो मातृकण्ठतः । सुप्तस्याद्य हृतस्तेन, रजन्यां मम पार्श्वतः ॥ ५८ ॥ ज्ञात्वा तं तु गतं हारं, देवी दुःखं तथाऽकरोत् । यथाऽहं मातृदुःखेन, भृशं चिन्ताकुलोऽभवम् ॥ ५९ ॥ प्रतिज्ञाऽथ कृताऽस्तीति, देव! देव्याः पुरो मया । पञ्चाहान्तर्न चेद् हारं, ददेऽग्निं साधये तदा ॥ १६० ॥ देव्याऽपि भणितं देव!, तं हारं न लभे यदि । मर्त्तव्यं तन्मया नूनं, सन्देहो नात्र विद्यते ॥ ६१ ॥ अदृश्यः कोऽपि भूतोऽयं, घटतेः वाऽथ राक्षसः । जन्मान्तरस्य वैरी मे, प्रचण्ड परमेश्वरः ॥ ६२ ॥ एक द्वौ त्रींश्च यामान् वा, यावदद्य ततो निशि । स्थास्यामि प्रहरे तस्य, ताताहमसिना युतः ॥ ६३ ॥ यदद्यैष्यति दुष्टः स, तं विजित्य तदा ततः । सर्वं लात्वा च तं हारं, पुनर्मातुः समर्प्य च ॥ ६४ ॥ पश्चात्पश्चिमयामिन्यां, करिष्यामि

नन्दिताः सहसाऽभवन् । प्रावृषेण्यां मयूरौघा, घनाघनमिवोन्नतम् ॥ ६२ ॥ राज्ञोचे बलसारस्य, कुमारस्यास्ति नाम किम् ? । उक्तं तेन महाराज !, बल इत्यभिधां व्यधाम् ॥६३॥ इतश्चाङ्के धृतो राज्ञा, सूरपालेन सोऽग्रहीत् । दीनारैकशतग्रन्थिं, पितामहकरस्थितम् ॥ ६४ ॥ पितामहेन तन्नाम, तस्यालापयता तदा । समक्षं सर्वलोकानां, चक्रे शतबलाभिधा ॥ ६५ ॥ तस्य सर्वस्वमादाय, जीवन्मुक्तः स सार्थपः । सकुटुम्बः कृतं भूपैरेतैरात्मीयभाषितम् ॥ ६६ ॥ सूरपालो जगादाथ, किञ्चित्समधिकं किल । वर्षं वियोगभाजोऽद्य, वत्सायास्तद्दिनादभूत् ॥ ६७॥ वर्षान्ते सह कान्तेन, नूनं मलयसुन्दरी । मिलिष्यतीति तज्ज्ञानिवचनं मिलितं पुनः ॥ ६८ ॥ सिद्धराजेन तत्सर्वं, राज्यं निजभुजार्जितम् । सूरपालनरेन्द्राय, जनकाय समर्पितम् ॥ ६९ ॥ मिथः स्नेहेन तौ यावत्, सकुटुम्बावुभावपि । राजानौ राज्यकार्याणि, कुर्वाणौ तत्र तस्थतुः ॥ ५७० ॥ तावत्तत्र समायातो, विहरन् भुवि केवली । भवान्तरकृतप्राणिपुण्यपापैकदर्पणः ॥ ७१ ॥ शिष्यः श्रीपार्श्वनाथस्य, नाम्ना चन्द्रयशा गुरुः । बहुसाधुपरीवारो, बोधको निर्वृते जिने ॥ ७२ ॥ युग्मम् । सकुटुम्बावुभौ भूपौ, तौ विज्ञाततदागमौ । जग्मतुर्वन्दितुं सूरिं, सर्वपौरजनान्वितौ ॥ ७३ ॥ केवली कथयामास, धर्मं भवनिवारकम् । ततः प्रस्तावमासाद्य, पृष्टं सूरेण भूभुजा ॥ ७४ ॥ भगवन् !

प्रयाणकम् । इत्युक्त्वा विरते पुत्रे, पित्रोक्तमेवमस्तु भोः ॥ ६५ ॥ युग्मम् । अथो निशि निजावासे, स्वयं कृत्वा स दीपकम् । द्वारं दत्त्वा गृहीत्वाऽसिं, दीपच्छायान्तरे स्थितः ॥ ६६ ॥ निशीथसमयो यावत्प्रवृत्तो वरनागरः ( खिलनागरे )। वातायनाध्वना तत्र, तावदेकः करोऽविशत् ॥ ६७ ॥ भ्रमन्तं तं करं दृष्ट्वा, कुमारश्चिन्तयन् हृदि । अहो चित्रं विना देहं, यदेको दृश्यते करः ॥ ६८ ॥ तदेवेदं किमप्यत्र, विधत्ते यदुपद्रवम् । चिरात् दृष्टं फलं (कलं) सर्वमधुना तु भविष्यति ॥ ६९ ॥ कङ्कणप्रमुखैर्यच्च, भूषितो भूरिभूषणैः । नूनं सम्भाव्यते नार्यास्तदयं सरलः करः ॥ १७० ॥ तन्नूनं रमणी कापि, भविष्यत्यत्र संस्थिता । देवमायावशान्नैति, परं मे दृष्टिगोचरम् ॥ ७१ ॥ असिघातेन चेदेनं, छिन्देऽहं देवताकरम् । यास्यत्येषा ततोऽघातहतापि न चटिष्यति ॥ ७२ ॥ ध्यात्वेति सहसोत्प्लुत्य, तमारुह्य करं क्षणात् । उभाभ्यां निजपाणिभ्यां, दृढं जग्राह राजसूः ॥ ७३ ॥ ततो निःसृत्य भवनाद्वेगाद्व्योम्न्युद्ययौ करः । तत्र स्थितः कुमारोऽपि, सर्ववीरशिरोमणिः ॥ ७४ ॥ कुमारे निर्भये तत्र, व्योममार्गेण गच्छति । चकम्पे स करः कामं, वातोद्धत इव ध्वजः ॥ ७५ ॥ करेणाच्छोटितोऽप्येष, गाढं चक्रे करग्रहम् । निर्विघ्नः स ततो हस्तः, समुत्पत्य निपत्य च ॥ ७६ ॥ इतश्च प्रकटीभूतां, पुरो दृष्ट्वा सुराङ्गनाम् । कुमारश्चिन्तया-

स सप्रियः ॥ १३ ॥ अशुभं शकुनं मुण्डः, सम्मुखोऽयं यदागतः । भविष्यत्यफला यात्रा, किञ्चिच्चान्यदमङ्गलम् ॥ १४ ॥ जल्पन्तीति प्रिया तस्य, सुन्दरी वाहनं निजम् । परिवारं च संस्थाप्योपसर्गानकरोन्मुनेः ॥ १५ ॥ उपसर्गो ममैषोऽत्र, साम्प्रतं समुपस्थितः । विचिन्त्येति झटित्येष, कायोत्सर्गे स्थितो मुनिः ॥ १६ ॥ कृत्वाऽहङ्कारमस्माभिः, सममेष स्थितो व्रती । भणन्ती निष्ठुरं चेति, प्राकुपत्प्रियसुन्दरी ॥ १७ ॥ अमुष्मादिष्टकापाकात्, ज्वलतोऽग्निमिहानय । येनैष दह्यतेऽस्माकमपैत्यशकुनं पुनः ॥१८॥ पाखण्डिनोऽस्य निःशेषा, स्फेट्यतेऽहङ्कृतिर्यथा । इत्यादिष्टो निजो भृत्यः, सुन्दरोऽभिधया तया ॥१९॥ युग्मम् । तेनोचे पादयोर्न स्तः, पादुके मम सम्प्रति । ततः कण्टकमध्येन, को यास्यति निरर्थकम्? ॥ ६२० ॥ मुञ्चैनमभिप्रायं, यूयं प्रचलताग्रतः । श्रुत्वेति जल्पितुं लग्नः, प्रियमित्रः क्रुधा ज्वलन् ॥ २१ ॥ अहो एतस्य बध्नीत, सुन्दरस्य क्रमौ वटे । भूमौ न लगतो येन, भज्यन्ते नैव कण्टकाः ॥ २२ ॥ सुन्दर्यपि समुत्तीर्य, शकटात्कुपिता भृशम् । वियोग आवयोर्मा भूदनेनाशकुनेन ते ॥ २३ ॥ विप्रयोगस्तवैवास्तु, सदा स्वैर्बन्धुभिः सह । पाखण्डिराक्षस ! त्वं रे, सर्वजीवभयङ्करः ॥ २४ ॥ नानेत्याक्रोशवाक्यानि, जल्पन्ती सापि निष्ठुरम् । लेष्टुभिस्ताडयामास, त्रिः स्वं शर्मेव तं मुनिम् ॥२५॥त्रिभिर्विशेषकम् । मुनिहस्ताद्गृहीत्वा च, रजो-

यत्ताचित्तेन, क्षन्तव्यमविनीतयोः ॥ ३८ ॥ उपायान्तरमाख्याहि, तं कञ्चन मुनेऽधुना । आवां येन विनिर्मुक्तौ, भवावः पातकादतः ॥ ३९ ॥ पारयित्वाऽथ साधुः स, कायोत्सर्गमभाषत । कुप्येम चेद्वयं तन्न, जीवेत्कोऽपीह भूतले ॥ ६४० ॥ युवाभ्यां तु विवेकिभ्यां, भाव्यं त्याज्या च मूढता । जिनधर्मो ग्रहीतव्यः, सर्वपापक्षयङ्करः ॥ ४१ ॥ मुनिपार्श्वे ततस्ताभ्यां, श्रद्धालुभ्यामुपाददे । श्राद्धधर्मो व्रतै रम्यः, सम्यग् सम्यक्त्वसंयुतः ॥ ४२ ॥ अनगारं तमामन्त्र्य, भक्तपानादिभिस्ततः । दम्पती तौ निजं गेहं, गतौ संवेगरङ्गितौ ॥ ४३ ॥ महात्मा सोऽपि भिक्षार्थं, नगराभ्यन्तरे ययौ । तयोः पुण्यवशाद्गेहं, सम्प्रापच्च परिभ्रमन् ॥ ४४ ॥ कृतार्थं मन्यमानाभ्यां, स्वं ताभ्यां परया मुदा । विशुद्धैर्भक्तपानाद्यैः, स साधुः प्रतिलाभितः ॥ ४५ ॥ पालयन्तौ ततः सम्यग्, श्राद्धधर्ममुभावपि । अकृत्रिमां मिथः प्रीतिं, दधतौ तौ स्थितौ सुखम् ॥ ४६ ॥ अथान्यदाऽलगत् रुद्राभद्राभ्यां कलहो महान् । तयोर्द्वयोर्निमित्तेन, केनापि स्नेहयुक्तयोः ॥ ४७ ॥ धिगावयोरिदं जन्म, जीवितं तु निरर्थकम् । यद्येवं कलहो नैव, निवर्तते कदाचन ॥ ४८ ॥ तदावाभ्यां यथाशक्ति, धर्मो दानादिकः कृतः । त्यज्यते जीवितं चैतदिदानीं कलहेन किम् ? ॥ ४९ ॥ एकान्ते मन्त्रयित्वैवमेकचित्ते उभे अपि । अनाख्याय च कस्यापि, कूपे ते पेततुर्द्रुतम् ॥ ६५० ॥

सावधानदृशा पश्यन्, ॥ १९० ॥ भूघर्षणारवम् गाढं मूलेऽस्य, तावत् शुश्राव
स्कन्धे, तस्थौ यावन्नृपात्मजः । तावत् शुश्राव मूलेऽस्य, गाढं भूघर्षणारवम् ॥ १९० ॥ सावधानदृशा पश्यन्, ॥ ९१ ॥ कुमारश्चिन्तयामास, स्कन्धेनास्फालने-
कुमारो मूलसम्मुखम् । आगच्छन्तमजगरमर्धग्रस्ताऽङ्गिनं गुरुम् ॥ ९१ ॥ कुमारश्चिन्तयामास, स्कन्धेनास्फालने-
च्छया । क्रूरः कवलितप्राणी, जीवः कोऽपि समेत्ययम् ॥ ९२ ॥ दीयते चेदजगरग्रस्तस्यैतस्य देहिनः । जीवितं
तन्समाप्यत्रागमनं सफलं भवेत् ॥ ९३ ॥ उत्ततार तरुस्कन्धादवलम्ब्याथ साहसम् । करुणापूर्णहृदयः, प्रच्छन्नो
निभृतक्रमः ॥ ९४ ॥ यावत्सोऽजगरो वेष्टं, समं मूलेन दास्यति । कुमारस्तत्पुरस्तावत्, स्थानमास्थाय संस्थितः ॥९५॥
दक्षत्वेन ततस्तस्य, गृहीत्वौष्ठयुगं समम् । कराभ्यां पाटितं तेन, तन्मुखं जीर्णवस्त्रवत् ॥ ९६ ॥ तन्मुखात्पतिता
चैका, युवती मन्दचेतना । जल्पन्तीति कुमारस्य, शरणं मे महाबलः ॥ ९७ ॥ दृष्ट्वा तामात्मनो नाम, गृह्यमाणं
तया स्त्रिया । श्रुत्वा च विस्मितश्चित्ते, कुमारोऽतिशयेन सः ॥ ९८ ॥ मुक्त्वाऽथाजगरस्यास्यं, हस्ताभ्यामुभये दले ।
पश्यन्नासन्न एतस्याः, सोऽपश्यन् मुखपङ्कजम् ॥ ९९ ॥ ततो मलयसुन्दर्याः, सदृक्षां वीक्ष्य तां वशाम् । चमत्कृतः स
चिक्षेप, वातं वस्त्रेण शीतलम् ॥ २०० ॥ मूर्च्छापरवशा बाला, सा तं श्लोकमचीकथत् । कुमारेण ततोऽज्ञायि, सैषा
मलयसुन्दरी ॥ १ ॥ आदरेण ततस्तस्या, देहसंबाहनापरे । कुमारे स्वस्थताभाजो, दृष्टिरुन्मीलिता क्षणात् ॥ २ ॥

मेतया । कण्ठे कनकवत्याः स, ततो नीत्वा निवेशितः ॥ ६४ ॥ अत्रान्तरेऽवदद्धीरधवलो विस्मिताशयः । भगवन् !
किमिदं सम्यग्, वदास्तनाकमसम्भवि ? ॥६५॥ येनैष मिलितो नैव, कदाप्यस्या महाबलः । स्वयंवराभिधं मुक्त्वा,
तदैकं वरमण्डपम् ॥ ६६ ॥ ततः कुमारसुन्दर्योर्दम्पत्योः स्मयमानयोः । सर्वमप्यवदत्सूरिर्ज्ञानदृष्टत्रिविष्टपः ॥ ६७ ॥
कुमारो मिलितः पूर्वं, यथा तत्रागतश्च सः । लक्ष्मीपुञ्जो यथा हारः, कुमार्याऽस्मै समर्पितः॥६८॥ तया कनकवत्या च,
यथा प्राग्भववैरतः । कूटाख्यानैः पिता पुत्र्या, उपरिष्टात्प्रकोपितः ॥ ६९ ॥ कुमारोऽपि निजावासात्, तयैव सहृत-
स्तदा । तेनाहृता यथाऽनेशत्पुनः सा नागमद्यथा ॥ ६७० ॥ इत्याद्यशेषं कनकवत्याः प्रोक्तं कथानकम् । ततः
सर्वेऽवदन्नेवं, धिग् धिग् च नीचयोषिताम् ॥ ७१ ॥ मृत्वा कर्मकरः सोऽथ, सुन्दरो वटपादपे । भूतो बभूव तत्रैव,
पृथ्वीस्थानपुराद्बहिः ॥ ७२ ॥ ततो यदा भ्रमंस्तत्र, सम्प्राप्तोऽसौ महाबलः । ज्ञानेनावगतस्तेन, तदा भूतसुपर्वणा
॥ ७३ ॥ बध्नीतास्य वटे पादौ, भूमौ न लगतो यथा । इति तत्प्रियमित्रस्य, स्मृतं तेन वचस्तदा ॥ ७४ ॥ तदे-
तस्याप्यहं काञ्चित्, पीडां कुर्वे तथाविधाम् । ध्यायन्निति शबस्यास्ये, स्थित्वा भूतो जजल्प सः ॥७५॥ हंहो मूढ !
किमेवं मामत्रोद्बद्धं हसस्यलम् । उद्बन्त्स्यसे त्वमप्यत्र, निश्येष्यन्त्यां वटद्रुमे ॥७६॥ अधोमुखोश्चोर्ध्वपादो, बहुदुःखं

कुमारः स्माह मुञ्चाशु, निद्रामुद्रां मृगेक्षणे ! । गृहाण स्फुटचैतन्यं, ममातिव्याकुलं मनः ॥ ३ ॥ उन्मील्य नयने सम्यगुत्थिता सा नृपात्मजा । वपुः सम्बाहनाऽऽसक्तं, वीक्षाञ्चके नृपात्मजम् ॥ ४ ॥ वपुः संवृत्य पश्यन्ती, बाला तं स्निग्धया दृशा । उवाच जीविताऽहं तु, कथं मे तेऽपि सङ्गमः ? ॥ ५ ॥ कुमारः स्माह तन्वङ्गि !, प्रत्यासन्नाऽऽपगाजले । प्रक्षाल्य वपुस्तावज्जम्बालाविलमात्मनः ॥ ६ ॥ पश्चादावां गदिष्यावो, वृत्तान्तं तं निजं निजम् । इत्युत्थाप्य कुमारी सा, नीता तेन नदीतटम् ॥ ७ ॥ वपुः प्रक्षाल्य पीत्वा च, जलं चावृत्य तावुभौ । उपविष्टौ पुनः स्वस्थौ, तस्यैवाम्रतरोस्तले ॥ ८ ॥ ततो मलयसुन्दर्या, पृष्टः सन्तुष्टचेतसा । कुमारेणाखिलोऽभाणि, स्ववृत्तान्तोऽतिचित्रकृत् ॥ ९ ॥ चमत्कारकरं श्रुत्वा, वृत्तान्तं तस्य विस्मिता । कुमारी कम्पयामास, स्वमूर्द्धानं पुनः पुनः ॥ २१० ॥ क्षिपन्ती स्नेहलां दृष्टिं, कुमारे सा जगौ पुनः । अनुभूतमहो कष्टं, त्वया सुन्दर ! कीदृशम् ? ॥ ११ ॥ कुमारः स्माह तन्वङ्गि !, स्ववार्त्तां ब्रूहि मूलतः । उदरेऽजगरस्यास्य, कथं त्वं पतिता किल ? ॥ १२ ॥ तादृशं सौधमारूढा, रक्ष्यमाणा महाभटैः । अनेन त्वमिहानीता, गिलित्वा पाप्मना कथम् ? ॥ १३ ॥ सा जगाद प्रवेशं न, जानाम्यजगरोदरे । अन्यत्सर्वं शृणु त्वं मे, भूत्वा वज्रसमोऽधुना ॥ १४ ॥ इतश्चाकर्णयामास, कुमारो मर्त्यसञ्चरम् । चित्ते च चिन्त-

पातकमर्जितम् । पश्चात्तापं वितन्वन्त्यां, पश्चात् क्षिप्तं पुनर्बहिः ॥९०॥ पञ्चभिः कुलकम् । किञ्चनोद्धरितं यच्च, प्राप्तस्तस्यानुभावतः । वियोगो निजलोकेभ्यो, द्वाभ्यामाभ्यां त्रिरुच्चकैः ॥ ९१ ॥ पश्चात्कनकवत्याश्च, वैरिण्याः पूर्वजन्मनः । राक्षसीत्वकलङ्कोऽस्या, निर्दोषाया अजायत ॥ ९२ ॥ आभ्यां सेहे महादुःखं, स्वस्वकर्मानुमानतः । येनानुभूतमेवात्र, बलवत्कर्म निर्जरेत् ॥ ९३ ॥ पुरा मलयसुन्दर्या, यद्रजोहरणं हृतम् । मुनिहस्तादभूत्तेन, वियोगः सह सूनुना ॥ ९४ ॥ उपसर्गान् पुरा कृत्वाऽमुष्याराधितो मुनिः । उत्पन्नकेवलज्ञानो, महाराजाहमेव सः ॥ ९५ ॥ अस्या मलयसुन्दर्याः, कुमारस्य च सम्प्रति । द्वितीयं जन्म राजेन्द्र, ! भवस्त्वेकः स एव मे ॥ ९६ ॥ राजोचे भगवंस्ते द्वे, सुरी कनकवत्यपि । एतयोर्वत्सयोः किञ्चिदतोऽप्यपकरिष्यतः ? ॥ ९७ ॥ सूरिरूचे यदा राजन्, ! कुमारेणाहता सुरी । गतोपशान्तवैरा सा, तदैव निजमास्पदम् ॥ ९८ ॥ भ्रमन्ती कनकवती, साऽत्रैव नगरे पुनः । उपद्रोष्यत्यमुं राजन्नेकशस्तव नन्दनम् ॥ ९९ ॥ ततः कनकवत्येषा, व्यन्तरी साप्युभे अपि । संसारमर्जितैनस्के, अनन्तं पर्यटिष्यत ॥ ७०० ॥ राजन् ! मलयसुन्दर्या, महाबलनृपस्य च । यस्त्वया प्राग्भवः पृष्टः, स मया कथितोऽखिलः ॥ १ ॥ एवं मलयसुन्दर्या, महाबलनृपस्य च । निशम्य चरितं सर्वे, बभूवुर्भवनिःस्पृहाः ॥ २ ॥ दम्पतीभ्यां

यामास, रजन्यां कश्चरेदिह ? ॥१५॥ चौरश्चेद् द्यूतकारो वा, भवेज्जारोऽथ घातकः । तन्नारीसन्निधौ कर्तुं, शक्यतेऽस्य न किञ्चन ॥ १६ ॥ भविष्यत्यथवा कोऽपि, कुमार्याः पूर्वसंस्तुतः । स इमां वीक्ष्य मत्पार्श्वे, करिष्यत्यसमञ्जसम् ॥ १७ ॥ ध्यात्वेति गुटिकां केशपाशादाकृष्य लीलया । सङ्घृष्याम्ररसेनास्याश्चित्रं भालेऽकरोदसौ ॥ १८ ॥ तत्प्रभावेण पुंरूपं, दृष्ट्वा तामवदच्च सः । सन्निष्ठ्यूतेन संस्पृष्टं, यावच्चित्रमिदं तव ॥ १९ ॥ तावत्स्वाभाविकं रूपं, भविष्यति न ते क्वचित् । चक्रे रूपपरावर्त्तमागच्छद्दुष्टशङ्कया ॥ २० ॥ यतो न ज्ञायते सम्यग्, रजन्यां तिमिरे सति । चौरो वाऽन्यतरः कोऽप्यागच्छत्यनुमार्ग एव हि ॥ २१ ॥ इहागच्छत्वसावेक, एवावां द्वौ जनौ पुनः । पश्यत्वाशु विलक्षो वा, यातु स्थानं यथेप्सितम् ॥ २२ ॥ यावन्न ज्ञायते सम्यग्, पर्यन्तोऽस्य कथञ्चन । स्थातव्यं तावदावाभ्यां, मौनेनात्रैव सुन्दरि ! ॥ २३ ॥ मा कार्षीस्त्वं भयस्यापि, लेशं लोलेक्षणे ! हृदि । वारयिष्यामि गच्छन्तमपि वातं तवोपरि ॥ २४ ॥ एवं संस्थापितां बालां, कुमारो यावदैक्षत । तावदेकामपश्यत्स्त्रीमागच्छन्तीं द्रुतं द्रुतम् ॥ २५ ॥ ततोऽभाणि कुमारेण, स्वरेण मृदुना शुभे ! । काऽसि त्वमसहाया किं, कम्पः किं तव वर्ष्मणि ॥ २६ ॥ किञ्चास्ति भूप्रदेशोऽत्र, नगरं किं ! नृपश्च कः ? । आवां वैदेशिकौ विद्धि, न किञ्चिदुषितावपि (विह) ॥२७॥ आश्वासिताऽथ मधुराला-

सेनापतिं निजम् । सार्द्धं शतबलेनागात्, स्वपुरं च महाबलः ॥ १६ ॥ राज्यं च पालयामास, जितदुर्जयशात्रवः । सकुटुम्बः सिषेवे च, जिनधर्ममहर्निशम् ॥ १७ ॥ तस्य व्यन्तरदेवस्य, साहाय्याद्विषयान् बहून् । वशीचकार चक्रे च, जिनधर्मसमुन्नतिम् ॥ १८ ॥ प्रासादान् कारयामास, जिनानां च पुरे पुरे । स्मरन् पूर्वभवं चक्रे, साधुभक्तिं च सर्वदा ॥ १९ ॥ द्वितीयोऽथ तयोः पुत्रः, सहस्रबलसंज्ञितः । कालक्रमेण सञ्जज्ञे, निजवंशधुरन्धरः ॥७२०॥ कृत्वा बहूनि वर्षाणि, राज्य वयसि पश्चिमे । स राज्ये स्थापयामास, सहस्रबलमंगजम्॥ २१ ॥ ततः सागरतिलके, वेलाकूले रमाकुले । राज्यं पालयति ज्येष्ठे, पुत्रे शतबलाभिधे ॥ २२ ॥ पृथ्वीस्थाने क्रमायातं, राज्यं शासति सुन्दरम् । गुणज्येष्ठे कनिष्ठे च, सहस्रबलनामनि ॥२३॥ पादमूले गुरोर्भार्यायुक्तो राजा महाबलः । महोत्सवेन जग्राह, विधिना संयमश्रियम् ॥२४॥ त्रिभिर्विशेषकम् ॥ द्वावपि द्विविधां शिक्षां, शीलयन्तौ विजह्रतुः । सार्द्धं गुरुजनैर्नित्यं, तप्यमानौ तपश्च तौ ॥२५॥ गत्वा गत्वा च तौ धर्मे, प्रेरयामासतुः सुतौ । वारयामासतुर्नित्यं, व्यसनासेवनात्पुनः ॥ २६ ॥ मन्यमानौ कृतार्थं स्वं, गुरुशिक्षाभिरन्वहम् । तावुभौ बान्धवौ जातौ, दृढस्नेहौ परस्परम् ॥ २७ ॥ तथा च तावजायेतां, जिनधर्मैकतत्परौ । येऽन्येषां मार्गदेष्टारो, मार्गात् भ्रश्यन्ति ते हि किम् ? ॥२८॥

तथा केनापि कार्येण, गतया तत्र कानने। कायोत्सर्गे स्थितो दृष्टः, स सन्ध्यासमये मुनिः ॥ ४२ ॥ उपलक्ष्य च तं सम्यग्, चिन्तयामास सा भयात्। महाबलः स एवैष, सूरपालसुतो व्रती ॥ ४३ ॥ कुत्सितानि समस्तानि, मूलाज्ज्ञानात्ययं मम। आविष्कर्त्ता च चेत्तानि, तद्भविष्याम्यहं कथम्? ॥ ४४ ॥ तत्करोमि तथा किञ्चित्, न यथा वेत्ति कश्चन। अन्यथाऽत्र न मे वासः, कथञ्चिन्न च जीवितम् ॥४५॥ एवं सा कनकवती, सूत्रयित्वा गता पुनः। प्रतीक्षमाणा समयं, तस्थौ दुष्टा निजे गृहे ॥ ४६ ॥ स्फुरितेऽथ निशाध्वान्ते, मार्गेषु निर्जनेषु च। केनाप्यलक्षिता पापा, चलिता सा निजाश्रयात् ॥ ४७ ॥ गृहीत्वाऽग्निं ययौ तत्र, सा यत्रास्ति स संयमी। कायोत्सर्गस्थितो मूर्त्त, इव धर्मः स्थिराशयः ॥ ४८ ॥ गोपुराणि प्रदत्तानि, मुनिकष्टमवेक्षितुम्। मीलितानीव नेत्राणि, नगरेणासहिष्णुना ॥ ४९ ॥ प्रशान्तलोकसञ्चारं, भूमिभागं विलोक्य तम्। शून्यारण्यवत्कनकवती हृष्टा भृशं हृदि ॥ ७५० ॥ तत्र चानीय केनापि, काष्ठान्यङ्गारहेतवे। पूर्वमेव प्रभूतानि, मुक्तान्यासन् स्वभावतः ॥ ५१ ॥ तया तैः पापया काष्ठैः, वेष्टयन्त्या तदा मुनिम्। आवव्रे स तथा क्वापि, न यथा ददृशे मनाग् ॥ ५२ ॥ चातुर्गतिकसंसारदुःखैर्नानाविधैः किल। तयाऽऽत्मा वेष्टितः काष्ठैर्वेष्टयन्त्या तदा मुनिम् ॥ ५३ ॥ जन्मान्तरस्य वैरिण्या, ततो निर्दययाऽनया। चतसृष्वपि काष्ठासु, ज्वलनो

॥ २४० ॥ कुमारोऽवक् सपत्नीना, तज्जातानां च सर्वदा । वैरं स्यादथ सा स्माह, भविष्यति किमप्यदः ॥ ४१ ॥ एतावन्ति दिनान्यस्याः, पश्यन्त्याश्छिद्रसन्ततिम् । तया निर्गमितानीह, दुष्टया क्लिष्टचित्तया ॥ ४२ ॥ अतिक्रान्त-निशायां तु, तस्थुष्यां मयि सन्निधौ । तस्याः कण्ठेऽपतद्धारो, लक्ष्मीपुञ्जाभिधः कुतः ॥ ४३ ॥ तद्वचोऽमृतवत् श्रुत्वा, कुमार इव जीवितः । पुनर्जगाद हारः सः, पतितः स्थानकात्कुतः ? ॥ ४४ ॥ सा स्माहाऽऽकाशतोऽकस्मात्पतितः किन्तु वीक्षितः । अस्माभिः कोऽपि नाऽऽकारो, न च दिक्षु विदिक्ष्वपि ॥ ४५ ॥ कुमारोऽचिन्तयत्तस्या, व्यन्तर्याः पार्श्वतोऽपतत् । अथ स्नेहेन केनापि, तस्याः कण्ठे व्यमोचि वै ॥ ४६ ॥ इयत्कालमभूद्यस्य, न शुद्धिः क्वापि केनचित् । एवंविधे महाकष्टे, यदर्थं पतितोऽस्म्यहम् ॥ ४७ ॥ यस्य स्वप्नाधिगम्यस्य, लाभाऽऽशापि न चाभवत् । प्रवृत्तिस्तस्य हारस्य, लब्धाहो ! पुण्यतोऽधुना ॥ ४८ ॥ तन्नूनं पूरयिष्यामि, प्रतिज्ञां तां निजां कृताम् । जीविष्यति कुलं सर्वमम्बा हृष्टा भविष्यति ॥ ४९ ॥ लब्ध्वा कनकवत्या तं, किं किं सुन्दरि ! निर्मितम् ? । कुत्र गतश्च हारः स, लक्ष्मीपुञ्जो मनोरमः ॥ २५० ॥ सोमा स्माह तया देव्या, हृष्टयाऽभाणि मा प्रति । अहो अपूर्वमाश्चर्यं, हञ्जे ! त्वं पश्य पश्य भोः ! ॥ ५१ ॥ पतितो यदीह स्थाने, निःसञ्चारे शरीरिणाम् । कुतोऽप्यागत्य कण्ठे मे, कुमार्या हार एष

गात्सपरीवारः, स्वपितुर्दर्शनोत्सुकः ॥ ६७ ॥ भस्मराशिस्थितं तावत्, दृष्ट्वा दग्धं मुनेर्वपुः । परिवारयुतो राजा, वक्तुं लग्नो भ्रसत्कृतः ॥ ६८ ॥ निर्भयेन भवभ्रान्तेर्निर्निमित्तारिणा निशि । नूनमेष महासाधुराः केनाप्युपसर्गितः ॥६९॥ निष्पुण्येन मया तात!, भवतां पादपङ्कजम् । लब्ध्वाऽपि दुर्लभं नैव, नतमागत्य हा द्रुतम् ॥७७०॥ युष्माकं पतिता दृष्टिः, प्रसन्ना न ममोपरि । मया कर्णपुटाभ्यां च, न पीतं वचनामृतम् ॥७१॥ मनोरथा व्यतीता मे, रोरस्येवाधुना हृदि । अद्यैवाहं निराधारोऽभूवं चानायकः पितः ! ॥ ७२ ॥ द्रष्टुं शक्या न युष्माकं, जातावस्था यदीदृशी । नूनं न सन्ति पुण्यानि, यन्नाभूत्सङ्गमोऽपि मे ॥ ७३ ॥ विलपन्निति भूपालः, शोकबाष्पाकुलेक्षणः । भ्रूविक्षेपेण सहसेत्यादिदेश निजान् भटान् ॥ ७४ ॥ पदानुसारतः पापं, तं पश्यत द्रुतं भटाः ! । लप्स्यध्वे निश्चितं यूयं, पापं तस्य फलिष्यति ॥ ७५ ॥ ततो विलोकयद्भिस्तैस्तदा पादानुसारसः । लब्धा सा कनकवती, दुराचारा स्थिता क्वचित् ॥ ७६ ॥ केशग्राहं समानीय, ततो राज्ञः समर्पिता । तेन ताडयता पृष्ठा, छिन्ननासाऽथ सा वशा ॥ ७७ ॥ हन्यमानाऽथ सा सर्वं, सम्यगूचे नृपाग्रतः । तेन नानाविधैर्मारैः, सा पापा मारिता पुनः ॥ ७८ ॥ तया प्राप्तमशेषं च, निजजन्मोर्जितं फलम् । नरकोर्व्यां समुत्पन्ना, सा षष्ठ्यां कष्टभाजनम् ॥ ७९ ॥ तातशोकं नरे-

सुतां मलयसुन्दरीम् ॥ ६५ ॥ इत्यनेकमृषावाक्यैर्वैरिण्या पूर्वजन्मनः । तथा प्रकोपयाञ्चक्रे, तया राजाऽतिदुष्टया ॥६६॥ यथा रोषान्धलो जातो, विसृज्याऽऽवां नरेश्वरः । देवीं चम्पकमालां तामेकान्ते समजूहवत् ॥ ६७ ॥ सर्वं निवेदितं तस्याः, साऽथ रोषारुणा जगौ । नो चेद्दास्यति तं हारं, पुत्री सत्यं तदाऽखिलम् ॥ ६८ ॥ नृपेणाऽऽकारिता तत्र, तं हारं याचिता सती । प्राक् सम्भ्रान्ता ततो भीता, कुमारी मौनमाश्रिता ॥ ६९ ॥ पश्चात्सङ्कल्प्य सा चित्ते, ददावेवं मृषोत्तरम् । मत्पार्श्वात्तात ! केनापि, स हारोऽपहृतो ननु ॥ २७० ॥ कुपितेन ततो राज्ञा, जगदे सा पुरो व्रज । हा पापे ! ! प्रसरावासे, मा मुखं दर्शयाऽऽत्मनः ॥ ७१ ॥ जननीसहितं तातं, दृष्ट्वा सा कुपिता भृशम् । ततो व्यावृत्य वेगेन, सम्प्राप्ता निजमन्दिरम् ॥ ७२ ॥ अप्रियं स्निग्धपित्रोः किं, कृतमज्ञानया मया ? । न स्मरामि ह हा किञ्चित्, भविष्यामि कथं कथम् ? ॥ ७३ ॥ हारे हृतेऽपि कथिते, परस्मिन्नपि नेदृशः । पित्रोर्भवति मे कोपो, परं नावैमि किञ्चन ॥ ७४ ॥ इत्यादि चिन्तयन्ती सा, स्मरन्त्यागोऽपि मूलतः । कुमारी दुःखिता तस्थौ, विच्छायाऽऽननपङ्कजा ॥ ७५ ॥ नृपेणोचे स्फुटं देवि !, कुमार्य्या दुष्टचेष्टया । लक्ष्मीपुञ्जाभिधो हारः, कुमाराय समर्पितः ॥ ७६ ॥ ततः कनकवत्या यत्, कथितं तन्मृषा नहि । मारयिष्यति मामेषा, तैर्दुष्टैर्मिलिता घनैः ॥७७॥ एषा दुष्टाऽऽवयोरिष्टाऽतीव

जगादैवं नृपात्मजा ॥ २९० ॥ अहो किमपि भूपस्य, ज्ञायते कोपकारणम् ? । स स्माहाहं न जानामि, परमार्थं नृपात्मजे ! ॥९१॥ दध्यौ सा मानसे हाहा, कोपो निष्कारणे मयि । तात ! जातस्ततो भावी, पश्चात्तापो महांस्तव॥९२॥ अयं केन विसंवादः, कृतस्तेऽकारिणाऽरिणा । तवाविचारकारित्वमियत्कालमभून्नहि ॥ ९३ ॥ निःसीमस्ते गतः कुत्रापत्यस्नेहः स तादृशः । अदर्शनेन मे येनानिष्टशङ्की क्षणादभूः ॥ ९४ ॥ अम्बे ! चम्पकमालेऽहं, तादृग् स्नेहेन लालिता । युक्तायुक्तं तथा सर्वं, ज्ञापिता हितया त्वया ॥९५॥ कथं त्वमपि सञ्जाता, पाषाणकठिनाऽधुना । कथमेको न सोढोऽयमपराधः कृतो यदि ? ॥ ९६ ॥ असमस्नेहयुक्तोऽपि, बान्धवो मलयाभिधः । न कथं कथयत्येत्य, वृत्तान्तममुमादितः ॥९७॥ अहो ममोपरि स्नेहः, सर्वेषां मूलतोऽत्रुटत् । सर्वे वज्रकठोरास्तु, जाता दोषेण केनचित् ॥ ९८ ॥ नूनं पुण्यानि मे मूलादपि च्छिन्नानि सम्प्रति । स्नेहलोऽपि यतो जातो, जनोऽयं वैरिसन्निभः ॥९९॥ ततो देवी स्फुटाह्नाय, विवरं भूमि ! देहि मे । गत्वा रसातलं येन, निर्वृत्ताऽऽशु भवाम्यहम् ॥३००॥ खिद्यमानेति सा दध्यौ, तातं विज्ञपयाम्यहम् । एकशो भवतात्पश्चात्, भाव्यं यत्कर्मणा मम ॥ १ ॥ आकार्याथ द्रुतं वेगवतीं कार्यं निवेद्य च । तया प्रस्थापिता राज्ञः, पार्श्वे विज्ञापनाकृते ॥२॥ गत्वा वेगवती वेगात्प्रजापालं व्यजिज्ञपत् । स्वामिन् ! विज्ञपयत्येवं,

कृत्वा मनसि निर्भया ॥१६॥ गच्छन्ती पादचारेण, वेष्टिता राजपूरुषैः । साऽपतत्पुनरुत्तस्थौ, प्रस्खलच्च पदे पदे ॥१७॥
हा कुमारि! किमस्माकं, हृदयं न स्फुटेदिह । उड्डीयन्ते न किं प्राणा ?, दुःखदग्धाः स्थिताः किमु ? ॥ १८ ॥ हाहा
ते मधुरालापाः, क्व सन्मानमपि क्वचित् । क्व मिथो मन्त्रितं तच्च, जल्पतीति सखीजने ॥ १९ ॥ स्वामिन्येषा तवा-
वस्था, किमस्माकं बभूव न । जीवन्तः किं करिष्यामो ?, निर्नाथाश्चाधुना वयम् ॥ ३२० ॥ त्वां विना दुःखिता बाढं,
स्थास्यामः स्थानकान्तरे । स्मरतीति मुहुः कर्मकरलोकेऽनुगच्छति ॥ २१ ॥ हाहा महानराधीश !, त्वयाऽस्थाने कृता
रुषः । अपराधेऽपि किं हन्त !, स्वमपत्यं निहन्यते? ॥ २२ ॥ यद्येष चिन्तितोऽनर्थस्त्वया नाथ ! विचक्षण ! । कथं
तदेष आरब्धः, स्वयंवरणमण्डपः ? ॥ २३ ॥ कन्योद्वाहोत्सुकानां तु, प्राप्तानामिह भूभुजाम् । सर्वेषां साम्प्रतं तेषां,
हा दास्यसि किमुत्तरम् ?॥ २४॥ हा हा चम्पकमाले ! त्वं, माताऽस्यास्तत् कथं बलात् । राजा न वारितो दुष्टाध्यव-
सायादपि त्वया ? ॥ २५ ॥ हाहा सुमानुषीरत्नशून्यं सर्वमभूज्जगत् । एतावतां गुणानाञ्च, क्व आवासो भविष्यति ?
॥ २६ ॥ विलपत्येवमत्यर्थं, विज्ञपय्य नृपं बहुः । विलक्षीभूय मिलिते, समन्तान्नगरीजने ॥ २७ ॥ राजाङ्गजा विदा-
रितचरणा कण्टकादिभिः । क्षरद्रक्ताऽन्धकूपस्य, तस्य कण्ठं समासदत् ॥ २८ ॥ एकादशभिः कुलकम् । महाबलकुमारः

सः, सूरपालस्य नन्दनः । साम्प्रतं शरणं मेऽस्तु, जल्पन्तीति पुनः पुनः ॥ २९ ॥ हाहारवेषु लोकानामुत्थितेषु समन्ततः । अन्धकूपे ददौ बाला, झम्पां शम्पाभ्रमप्रदा ॥३०॥ ततो बाष्पजलैः सिञ्चन्, भुवं निन्दंश्च भूपतिम् । उपालम्भं ददत् दुष्टदैवस्य निखिलो जनः ॥ ३१ ॥ जगाम दुःखी व्यावृत्य, स्वं स्वं स्थानं निशागमे । गत्वा भूमीपतेः सर्वं, कथितं राजपुरुषैः ॥ ३२ ॥ युग्मम् । सकुटुम्बोऽथ भूपालो, मदितोऽचिन्तयत्तदा । निहता सुष्ठु सा दुष्टा, जातं क्षेमं कुलस्य मे ॥ ३३ ॥ स्वयंवराहूतभूमीभृतां साम्प्रतमित्यहम् । ज्ञापयामि मृता रोगवशान्मलयसुन्दरी ॥३४॥ आगन्तव्यं न युष्माभिरत्र कार्येऽधुना ततः । किन्तु पृच्छामि कनकवतीमप्युपकारिणीम् ॥ ३५ ॥ ततो यावद्ययौ राजा, सुबुद्धिसचिवान्वितः । तस्या वासगृहं तावद्द्वारं दत्तं ददर्श सः ॥ ३६ ॥ कुञ्चिकाविवरेणाथ, यावदैक्षत भूपतिः । दीपोद्योतेन कनकवतीं तावद्व्यलोकत ॥ ३७ ॥ तां कृतोद्भटशृङ्गारां, प्रमोदेन करस्थितेः । जल्पन्तीमिति हारस्य, लक्ष्मीपुञ्जस्य सम्मुखम् ॥ ३८ ॥ हंहो हारवर ! त्वं मे, हस्ते पुण्यैश्चिरागतः । सर्वं तव प्रसादेन, वाञ्छितं साधितं मया ॥३९॥ त्वामत्र गोपयित्वा तु, कोपयित्वा नराधिपम् । मयाऽद्य घातिता कन्या, सा जन्मान्तरवैरिणी ॥ ४० ॥ ततश्चिन्तामणीकल्प !, हार त्वं मम दुर्लभः । अतःप्रभृति राजेव, प्रसन्नो भव सर्वदा ॥ ४१ ॥ तच्छ्रुत्वा हारमालोक्य, दुःखार्त्तो भूपति-

र्जगौ । हाहा पापे! त्वया कूटं, विधाय च्छलितोऽस्म्यहम् ॥४२॥ पुत्रीपार्श्वात्स्वयं हारं, गृहीत्वा कथितं मम । महाबल-कुमाराय, हारः प्रादायि कन्यया ॥ ४३ ॥ सकुटम्बस्त्वया दक्षः, पापेऽहं विप्रतारितः । निर्दोषा घातिता पुत्री, जीवितं मम संहृतम् ॥ ४४ ॥ हाहा दुष्टेऽपराद्धं किं, मम पुत्र्या तया तव ? । ईयत्कालं न दूनं यत्कीटिकामात्रमप्यहो! ॥ ४५ ॥ द्वाभ्यामपि कराभ्यां द्वौ, कपाटौ ताडयन् दृढम् । पूत्कुर्वन्नुच्चकैर्हाहा, वञ्चितोऽस्मीति च ब्रुवन् ॥४६॥ प्राप मूर्च्छामतुच्छां स, भूपालो दुःखविह्वलः । सर्वोऽपि मिलितो लोकः, सहसा सर्वतोऽपिच ॥ ४७ ॥ सुसंभ्रान्तो जनो यावद्, हा हा किं किमिति ब्रुवन् । शीतलैर्जलवाताद्यैरुपचारपरोऽभवत् ॥४८॥ तावद् गवाक्षमार्गेण, तया मरण-भीतया । देव्या कनकवत्या द्राग्, दत्ता झम्पा मयापि च ॥४९॥ अहं मत्स्वामिनी चापि, क्वापि शून्यगृहे स्थिते । अन्योऽन्यं लोकसंलापान्, श्रुतवत्याविति क्षणम् ॥ ३५०॥ राजा कथमपि प्राप्य, चैतन्यं पूच्चकार सः । ततश्चम्पकमालाऽपि, तत्रायाता भयाऽऽकुला ॥ ५१ ॥ सा प्रपच्छ किमेतद्भो!, अस्माकं प्राणपातनम् । मुञ्चन्नश्रूण्यथो मन्त्री, सुबुद्धिः स्फुटमभ्यधात् ॥ ५२ ॥ कूटं कनकवत्यास्तत्, यथा दृष्टं श्रुतं यथा । तथा मन्त्रिमुखाच्छ्रुत्वा, सर्वं शोकभरार्दिता ॥ ५३ ॥ देवी चम्पकमालाऽथ, कण्ठमालम्ब्य भूपतेः । महावेदनयाऽऽक्रान्ता, पूच्चकार गुरुस्वरम् ॥ ३५४ ॥

ततः कथञ्चित्सम्बोध्य, भणितौ तौ च मन्त्रिणा । विलोकयतमन्धान्धौ, कुमारीं तत्र तां युवाम् ॥ ५५ ॥ लभ्यते यदि जीवन्ती, क्षिप्तापि प्राणसंशये । कुमारी सा ततोऽस्माकं, पुण्यलेशोऽपि विद्यते ॥ ५६ ॥ तत्कालं स ततो गत्वा, नृपस्तत्रान्धकूपके । मध्ये निक्षिप्य पुरुषान्, वीक्षयामास तां सुताम् ॥५७॥ पश्यद्भिरपि तैस्तत्रान्धकूपेऽतिभयानके । ददृशे क्वापि नो तस्याः, कुमार्याश्चिह्नमप्यहो ॥ ५८ ॥ हताशोऽथ स्फुरत्कोपो, विलक्षवदनो नृपः । प्रासादं पुनरागत्य, मत्स्वा मिन्या गृहं ययौ ॥ ५९ ॥ उद्घाट्याथ गृहद्वारमदृष्ट्वान्तश्च तां नृपः । जाज्वल्यमानकोपाग्निर्वक्तुमेवं प्रचक्रमे ॥३६०॥ नष्टाऽसौ वैरिणी कुत्र ?, रे रे पश्यत पश्यत । तस्याः पदं निरीक्षध्वं, गता वातायनेन किम् ? ॥ ६१ ॥ अथ सर्वस्वमेतस्या, लुण्टितं राजपूरुषैः । राजादेशेन चाग्राहि, परिवारजनोऽखिलः ॥ ६२ ॥ निर्दोषायास्तनूजाया, निग्रहेणानुमूर्च्छितः । पश्चात्तापेन भूपालः, सार्द्धं चम्पकमालया ॥ ६३ ॥ जीविष्यति त्रियामायाः, पश्चाद्यामयुगं यदि । प्रातश्चिताप्रवेशेन, मरिष्यति तदा ध्रुवम् ॥ ६४ ॥ आवां द्रष्टुं विलोक्याथ, भ्रमतो राजपूरुषान् । ऊचे कनकवत्याऽहमेवमातङ्कयुक्तया ॥ ६५ ॥ न सुन्दरमिदं तावदेकत्रावामुभे अपि । प्रस्थिते यदि केनापि, ज्ञाते बध्येत्तदा ध्रुवम् ॥ ६६ ॥ इत्युक्त्वा सारमादाय, लक्ष्मीपुञ्जादिकं निजम् । वेश्यायाः स्निग्धसख्याः साः, मगधाया गृहं गता ॥ ६७ ॥ अह-

मेकाकिनी तत्र, स्थाने तु स्थातुमक्षमा । कान्दिशीका विनिःसृत्य, वेगेनात्र समागता ॥ ६८ ॥ यन्मे पृष्टं कुमारौ भो !, युवाभ्यां भयकारणम् । तन्मया कथितं सर्वमपि दुःखौघपूर्णया ॥ ६९ ॥ कुमारोऽथावदद्दुष्टयोषितां चरितान्यहो । विनाशितं सुदुष्प्रापं, कन्यारत्नं कथं तया ? ॥ ३७० ॥ जीवितव्यस्य सन्देहे, स्थापितोऽपि नरेश्वरः । कृताः प्रजाश्च निर्नाथा, इदं राज्यं च कम्पितम् ॥ ७१ ॥ आत्मनः सर्वनाशश्च, देशत्यागश्च निर्मितः । अकीर्त्तिर्वर्द्धिता लोके, तुच्छा धीर्योषितामहो ॥ ७२ ॥ सोमा स्त्री साऽवदत्तावद्, विभात्येषा विभावरी । तदेष्यति कुतोऽप्यत्र, कोऽपि भूपालपूरुषः ॥७३॥ गच्छाम्यहं पुरः क्वापि, जल्पन्तीति चचाल सा । कुमारौ तौ च पश्यन्ती, प्रसन्नस्निग्धया दृशा ॥ ७४ ॥ कुमारोऽथ कुमारीं तां, प्रत्युवाचाऽऽवयोरियम् । तद्दिनादपि कुद्धाऽद्य, वैरमेवं विशोधितम् ॥ ७५ ॥ अस्याः कनकवत्यास्तु, दास्या एवेति मूलतः । ज्ञातः सर्वोऽपि वृत्तान्तस्तावको राजनन्दने ! ॥ ७६ ॥ अहो स्वल्पेन कालेन, भुक्तं दुःखं त्वया महत् । इदृग्दुःखैर्न यद्भिन्नमहो ते हृदयं दृढम् ! ! ! ॥ ७७ ॥ अन्धकूपस्य मध्ये त्वं, निपातगतचेतना । नूनमेतेन गलिताऽऽजगरेण दुरात्मना ॥ ७८ ॥ कूपोऽपि सोऽत्र कुत्रापि, प्रत्यासन्नो भविष्यति । तस्मात् केनापि मार्गेणाऽजगरोऽयं विनिसृतः ॥ ७९ ॥ आम्रस्कन्धेन संश्लेषं, दातुमेषोऽत्र चागतः । कराभ्यां च मया धृत्वा,

निर्विलम्बं विदारितः ॥ ३८० ॥ अस्य मध्यात्कुमारि ! त्वं, पतिता मिलिता च मे । पुण्यैरतर्कितो जात, आवयो-रेष सङ्गमः ॥ ८१ ॥ दृष्ट्वा साऽजगरं भिन्नदेहं कम्पसमन्विता । भणिता भूपपुत्रेण, कार्या शङ्का नहि त्वया ॥ ८२ ॥ आवां यत्सङ्गतावेवमीदृग्दुःखार्दितावपि । तन्नूनमनुकूलोऽयमावयोर्भगवान् विधिः ॥ ८३ ॥ ततस्तौ द्वावपि श्लोकं, तं पठन्तौ पुनः पुनः । गत्वा गोलानदीतीरे, चक्रतुर्मुखधावनम् ॥ ८४ ॥ तस्यैवाम्रतरोः पक्वफलान्यास्वाद्य तावुभौ । नदीतटे स्थितं भट्टारिकाया भुवनं गतौ ॥ ८५ ॥ अद्राष्टां तत्र तौ काष्ठफालीयुग्मं तदन्तरा । देवी चम्पक-माला सा, तदा लब्धा महीभुजा ॥ ८६ ॥ तदन्तः शुषिरं दृष्ट्वा, शिरः कम्पयता भृशम् । महाबलेन किमपि, विचिन्त्य हृदि भाषितम् ॥ ८७ ॥ इदानीं त्रीणि कार्याणि, कर्त्तव्यानि मया शुभे ! । तावदेकं कुटुम्बं ते, त्रातव्यं मरणोद्यतम् ॥ ८८ ॥ द्वितीयं तु त्वमुद्वाह्या, पितृदत्ता मया ननु । तृतीयं हारदानेन, देयं मात्रे तु जीवितम् ॥ ८९ ॥ लक्ष्मीपुञ्जे गते हारे, पद्मावत्याः पुरो यका । स्वयंकृता प्रतिज्ञा सा, पूरणीया मया खलु ॥ ३९० ॥ तद् गच्छ त्वं पुरस्यान्तर्मगधागणिकागृहे । अनेनैव नृरूपेण, गन्तव्यं दिवसात्यये ॥ ९१ ॥ सा कनकवती तत्र, द्रष्टव्या हार-संयुता । वर्त्तितव्यं तथा तत्र, हारश्चटाति मे यथा ॥ ९२ ॥ गत्वाऽहं तु नृपं पामि, प्रविशन्तं चितानले । केनापि धी-

प्रयोगेण, देवीयुक्तं सुदुःखितम् ॥ ९३ ॥ देहि मह्यं कुमारि ! त्वं, मुद्रारत्नमिदं निजम् । मुद्राचौरमिति ज्ञात्वाऽन्यथा त्वं रुत्स्यसे भटैः ॥ ९४ ॥ नामाङ्कितं तदादाय, मुद्रारत्नं कचेषु सः । क्षिप्त्वा चाह त्वया भद्रे !, भ्रमणीयमलक्षया ॥ ९५ ॥ अद्य रात्रिः समग्राऽपि, वेश्यावासे प्रयास्यति । पश्यन्त्याः कनकवतीं, हारं तं च कुमारि ! ते ॥ ९६ ॥ गमयित्वा दिनं पश्चात्सायं पुनरिहैव हि । आगन्तव्यं त्वया येनावयोर्भवति सङ्गमः ॥ ९७ ॥ यतो विधाय कार्याणि, चिन्तितानि य (त) था यथा । कल्पे सायं समेष्येऽहमपि भट्टारिकागृहे ॥९८॥ कुमारकथितं चित्ते, धृत्वा सा प्रस्थिता ततः । चन्द्रावतीपुरीमध्यं, प्राप पुंरूपधारिणी ॥ ९९ ॥ विचिन्त्याऽऽगामिकार्याणि, यथा कार्याणि चेतसि । पश्चान्महाबलोऽप्येष, प्रतस्थे नगरीं प्रति ॥ ४०० ॥ अत्रान्ये बहवो भूपा, मिलिष्यन्ति ससेवकाः । एकस्य पान्थतुल्यस्य, प्रवेशोऽपि कथं मम? ॥१॥ ततस्तथा मया कार्यं, यथा भूपेषु सत्स्वपि । दत्ते कन्यामिमां मह्यं, पिताऽसाविति-चिन्तयन् ॥ २ ॥ कृतनैमित्तकाकल्पो, यावत्काति पदान्यगात् । वृक्षमूले गजं बद्धं, तावदैक्षत भूपभूः ॥ ३ ॥ त्रिभिर्विशेषकम् । निगाल्यमानमालोक्य, पुरीषं तस्य दन्तिनः । तेन पृष्टाः कुमारेण, ते जना इत्यचीकथत् ॥ ४ ॥ अत्रागतेन भूपस्य, पुत्रेण ह्यस्तने दिने । वेष्टितेक्षुलता कण्ठादुत्तार्य स्वर्णशृङ्खलाम् ॥ ५ ॥

चिताग्निं प्रथमोत्थितम् ॥ १८ ॥ विध्यापिते चितावह्नौ, राजा देवीसमन्वितः । बाह्याभ्यन्तरतापेन, सन्तप्तोऽपि बहिष्कृतः ॥ १९ ॥ नैमित्तिको बभाषेऽथ, राजन् ! मा भूस्त्वमाकुलः । सा जीवन्त्यस्ति ते क्वापि, पुत्री मलयसुन्दरी ॥ ४२० ॥ निमित्तस्य बलेनाहं, जानामि नरनायक ! । तस्येत्युक्तिसुधासेकान्निर्वृत्तो भूपतिर्जगौ ॥ २१ ॥ अहो नैमित्तिकैतावान्, पुण्यभारोऽस्ति मे नहि । जीवन्तीं स्वसुतां येन, क्वापि द्रक्ष्याम्यहं पुनः ॥ २२ ॥ तादृक्षे यदि कूपे सा, कृतान्तोदरसन्निभे । पतिताऽपि मृता नैव, न कोऽपि म्रियते ततः ॥ २३ ॥ किन्तु पश्चात्तापपूरसंतप्तेन च चेतसा । अवटे तत्र नो लब्धा, बहुधाऽपि विलोकिता ॥ २४ ॥ कुमारी तन्मृता नूनं, जग्धा जीवेन केनचित् । अतो मम सुखेनाग्नौ, मरणं किं न यच्छथ ? ॥ २५ ॥ नैमित्तिकस्ततः स्माह, शृणु राजन् ! वचो मम । अद्येयं वर्त्तते कृष्णा, द्वादशी तिथिरुत्तमा ॥ २६ ॥ अतो दिनात्तृतीयेऽह्नि, भूतेष्टाप्रहरद्वये । मिलितेषु समग्रेषु, लोकेषु क्षितिपेषु च ॥ २७ ॥ आहूतेषु कुमारेषु, मण्डपेऽत्र स्वयंवरे । यथास्थानोपविष्टेषु, पाणिग्रहणवाञ्छया ॥ २८ ॥ कुतोऽपि सहसा तस्याः, कुमार्या दर्शनं तव । वस्त्रालङ्कारयुक्ताया, भविष्यत्यविचिन्तितम् ॥ २९ ॥ त्रिभिः कुलकम् । यथेच्छं तद्विधातव्यः, स्वयंवरणमण्डपः । आगच्छन्तो नृपा नैव, वारणीयाः प्रभो ! त्वया॥४३०॥

गुणसेवधे ! ॥ ४३ ॥ तस्योपरि जनः सर्वो, हर्षोत्कर्षवशात्तदा । वस्त्राण्युत्तारयामास, सर्वाण्याभरणानि च ॥ ४४ ॥
उत्क्षिप्ताऽऽभरणो लोकः, संयोज्य करकुड्मलौ । जगादेति गृहाणेदं, प्रसीदाऽऽस्मासु सन्मते ! ॥ ४५ ॥ दीयते
यदि सर्वस्वं, हर्षदानेऽत्र तेऽधुना । तथाप्यस्योपकारस्य, पुरः स्वल्पं महामते ! ॥ ४६ ॥ तेनोक्तं ननु युष्माकं, मया
ग्राह्यं न किञ्चन । यदि गृह्णे ततः कीदृगुपकारो भवेन्मम ? ॥ ४७ ॥ अथाह नृपतिस्तस्य, स्तम्भस्य पुरुषोत्तम ! ।
यः कोऽपि पूजनविधिः, स कर्त्तव्यस्त्वयैव हि ॥ ४८ ॥ बबन्धे शकुनग्रन्थिं, तथेति भणताऽमुना । पप्रच्छेऽसौ
पुनर्ज्ञानी, राज्ञेति मुदितात्मना ॥ ४९ ॥ यथैतावत्त्वया ज्ञानिन् !, सर्वमेतन्निवेदितम् । पुरो ब्रूहि तथा को मे,
परिणेष्यति कन्यकाम् ? ॥ ४५० ॥ तेनोचे पृथिवीस्थाने, सूरपालस्य नन्दनः । महाबलः कुमारस्ते, परिणेष्यति
नन्दनाम् ॥ ५१ ॥ अनुरूपतया लोके, प्रशंसामुखरे सति । एकेन बन्दिना पेठे, तत्र कालनिवेदिना
॥ ५२ ॥ संत्यक्तपूर्वकाष्ठोऽयं, दुरालोकः स्वतेजसा । सूरः प्रवर्त्तते देव !, लोकानां त्वमिवोपरि ॥ ५३ ॥
विज्ञप्तो मन्त्रिणा राजा, प्रसीद परमेश्वर ! । गम्यते नगरीमध्ये, मध्याह्नसमयोऽभवत् ॥ ५४ ॥ ज्ञानिनाऽथ
समं राजा, चचाल स्वगृहं प्रति । प्रसरत्यतुले तूर्यरवे लोकप्रमोदिनि ॥ ५५ ॥ पौराणां नयनानन्दं, कुर्वन् शृण्वं-

भविताऽस्य तु ॥६८॥ ते सर्वे मिलिता भूपा, विलक्षीभूतचेतसः । क्रुद्धा उत्थापयिष्यन्ति, किमप्यत्रासमञ्जसम् ॥६९॥ इदं युक्तमयुक्तं वाऽधुना न ज्ञायते किल । कार्ये निष्पद्यमाने तु, ज्ञास्यते भविता यथा ॥४७०॥ अथ सायं समाजग्मुः, राजानः सपरिच्छदाः । आवासिता निवासेषु, दर्शितेषु पृथक्पृथक् ॥ ७१॥ नैमित्तिको नृपं प्रोचे, मन्त्रो मेऽस्त्यर्द्धसाधितः । न चेत्तं साधयाम्यद्य, ततोऽसौ नैव सिध्यति ॥ ७२ ॥ तन्मामद्यतनीमेकां, तमिश्रां विसृज प्रभो ! । नियमेनागमिष्यामि, निशान्ते पुनरप्यहम् ॥ ७३ ॥ सोऽनुज्ञातस्ततो राज्ञा, मन्त्रसाधनहेतवे । यत्किञ्चित् द्रविणं याति, तद्गृहाणेति जल्पता ॥ ७४ ॥ कियद् द्रव्यमुपादाय, नत्वा तं स विनिर्ययौ । राजापि गमयामास, तां निशां चिन्तया भृशम् ॥ ७५॥ प्रातरुद्घाट्यमानेषु, गोपुरेषु समन्ततः । स पुनः प्राणमद्भूपं, समागत्य निमित्तवित् ॥७६॥ पृष्टस्तुष्टेन भूपेन, सन्मान्य स पुमानिति । सुखेन मन्त्रसंसिद्धिः, सञ्जाता तव सत्तम ! ॥ ७७ ॥ स स्माहाभूत्कियन्मात्रा, सिद्धिर्मन्त्रस्य मे नृप ! । दुःसाध्यस्य कियन्मात्रा, भविष्यत्यधुना पुनः ॥ ७८ ॥ किन्तु स्मरंस्तवादेशं, तदेवाहमिहाऽऽगमम् । स्तम्भार्चनविधिं कृत्वा, पुनर्यास्यामि वेगतः ॥ ७९ ॥ अहो परोपकार्येष, मन्त्रं मुक्त्वाऽर्द्धसाधितम् । उक्तायामेव वेलायां, मत्कार्येण समागतः ॥ ४८० ॥ ईदृशा एव जायन्ते, नराःस्वीकृतकारिणः । इति

आनाय्य ज्ञानिना तेन, षड्हस्तप्रमिता शिला । निक्षिप्ता च भुवो मध्ये, द्वौ हस्तौ तत्र मण्डपे ॥ ९४ ॥ ऊर्ध्वीकृतो महास्तम्भः, स तेन ज्ञानिना स्वयम् । तस्याः पार्श्वेन संयोज्य, स्वप्रयोगेण यन्त्रितः ॥ ९५ ॥ तच्चापं वज्रसाराख्यं, पश्चिमेन शिलामिमाम् । तत्र संस्थापितं दूरे, नाराचेन समन्वितम् ॥९६॥ सिंहासनानि राज्ञान्तं(ऽन्तो), दक्षिणेनोत्तरेण च । संस्थापितानि तेनेह, परिवारासनानि च ॥ ९७ ॥ गन्धर्वैश्च समारेभे, गान्धर्वं मधुरस्वरैः । नर्त्तितुं नर्त्तकीभिश्च, तालमानलयानुगम ॥ ९८ ॥ कारयित्वा ततः पूजां, स्तम्भकोदण्डयोस्तयोः । नृपेणाह्वययामास, ज्ञानी सर्वान् महीभुजः ॥ ९९ ॥ आगच्छत्सु महीपेषु, पूर्णपार्श्वेषु सेवकैः । तत्रोपवेश्यमानेषु, ज्ञानी वेगेन निर्ययौ ॥ ५०० ॥ कृत्वा स्वाभाविकं रूपं, गत्वा गन्धर्वसंसदि । नैमित्तिकः पुमानेष, आसीनः सर्वमैक्षत ॥ १ ॥ क्व गतः ? सोऽभवच्चात्रेत्यादि जल्पन् ससम्भ्रमः । नृपस्तं वीक्षयामास, जनैः क्वापि स नेक्षितः ॥ २ ॥ जगादाथ नृपः सर्वं, विधाय निजभाषितम् । अर्द्धप्रसाधितं मन्त्रं, साधितुं स गतो ननु ॥ ३ ॥ नैमित्तिकवचः सर्वं, मिलितं नैकमेव च । महाबलकुमारो यत्कन्यायाः कथितो वरः ॥ ४ ॥ केनापि कारणेनात्र, स न प्राप्तो महोत्सवे । इदं मम सुतारत्नं, स कथं परिणेष्यति ? ॥५॥ शृण्वन्निति कुमारः स, हसंश्च पिहिताननः । चित्ते जगाद सर्वं हि, निदाने

ज्ञारयते पुनः ॥६॥ अथ सर्वेषु भूपेषु, निविष्टेषु यथाक्रमम् । श्रुतान्धकूपनिक्षेपमुख्यकन्याकथोक्तिषु ॥ ७ ॥ यूयं यामिह
कन्यां भोः !, परिणेतुं समागताः । हता सा तत् किमासीना ?, अन्योऽन्यमितिवादिषु ॥८॥ राजादेशेन बन्द्यूचे, यूयं
सर्वेऽपि भूभुजः । बाह्वोर्बलेन दुष्प्रेक्षा, आकर्णयत मे वचः ॥९॥ त्रिभिर्विशेषकम् ॥ वज्रसाराभिधं चापमिदमारोप्य ली-
लया । एकेनैव प्रहारेण, नाराचस्य दृढीयसा ॥ ५१० ॥ द्विहस्तमानमेतस्य, स्तम्भस्याग्रं निरावृतिः । आहत्याशु द्विधा
योऽत्र, करिष्यति महाबलः ॥ ११ ॥ परिणेष्याति कन्यां स, आविर्भूतां कुतोऽप्यतः । इत्युक्तं कुलदेवीभिरस्माकमिह
पर्वणि ॥१२॥ त्रिभिर्विशेषकम् ॥ अथोत्थाय महोत्साहो, बन्दिवाक्येन वेगतः । दुर्द्धर्षं धनुरालोक्य, लाटः पाटवमुज्जहौ
॥ १३ ॥ बन्दिना प्रेरितश्चौडो, भूपीठे चरणं दधौ । कोदण्डोद्दण्डतां वीक्ष्य, कालिमानं मुखे पुनः ॥ १४ ॥
आददानो धनुर्गौडो, भारेण न्यपतद्भुवि । जहसे राजलोकेन, दत्ततालं परस्परम् ॥ १५ ॥ चापमादाय कर्णाटो,
बाणं तूणं च मुक्तवान् । तस्थौ शरीरसङ्कोचं, दधानोऽयं पुनश्चिरम् ॥ १६ ॥ स्थानान्न चलिताः केऽपि, केऽपि लक्षा-
च्च्युता नृपाः । केऽपि जघ्नुः शरैः स्तम्भं, संरम्भेण समन्विताः ॥ १७ ॥ अभिन्ने तत्र ते स्तम्भे, लज्जया भूभुजो
भृशम् । आत्मानं बहु निन्दन्तो, वीर्याहङ्कारमत्यजन् ॥ १८ ॥ राजापि वीरधवलश्चिन्तयामास चेतसि । प्रकटा ना-

भवत्कन्या, जने हास्यं भविष्यति ॥ १९ ॥ चिन्ताचक्रसमारूढो, यावदेवं स भूपतिः । तस्थौ वीणाकरस्तावद्धुप-स्तम्भं महाबलः ॥ ५२० ॥ स्तम्भयित्वा जनं सर्वं, वीणावाद्येन तत्र सः । गृहीत्वा धनुराचख्यौ, सत्त्वं त्वं देव ! पश्य मे ॥२१॥ मा ग्रहीस्त्वं धनुर्मुञ्च, मुञ्च गान्धर्विक! द्रुतम् । एभिर्भिन्नो न यः स्तम्भः, स त्वया भेत्स्यते कथम्? ॥ २२ ॥ इति लोकनिषेधोक्तीः, शृण्वन्नारोप्य तद् धनुः । चक्रे टङ्कारवं लोकश्रुतीर्बधिरयन्नयम् ॥ २३ ॥ मुक्त्वा तत्स्थानकं ज्ञातस्थानमध्यस्थकीलिकाम् । छिन्दंस्तीक्ष्णेन बाणेन, स्तम्भं तं हतवानसौ ॥ २४ ॥ ऊर्ध्वं विघटिते तस्मिन्, सुदृढे स्तम्भसम्पुटे । पुण्यमुद्घटितं वीरधवलस्यास्य भूपतेः ॥ २५ ॥ कर्पूरमिश्रश्रीखण्डकस्तूरीकृत-लेपना । दिव्यालङ्कारवसना, ताम्बूलपूरितानना ॥ २६ ॥ वामेन पाणिना चारुबीटकं दक्षिणेन च । वरमालां तं च हारं, श्रीपुञ्जं बिभ्रती हृदि ॥ २७ ॥ तन्मध्ये ददृशे राज्ञा, कन्या मलयसुन्दरी । आनन्दपूर्णमनसा, समकालं जनेन च ॥ २८ ॥ त्रिभिर्विशेषकम् । अथापृच्छि कुमारी सा, नृपेण मुदितात्मना । वत्से ! कथय काष्ठे त्वं, प्रवि-ष्टाऽत्र कथं कदा ? ॥ २९ ॥ ततो जगाद सा बाला, पश्यन्ती पितरं मुदा । जीविता यत्प्रसादेन, कुलदेव्यो वदन्ति ताः ॥ ५३० ॥ कुमार्यामिति जल्पन्त्यामवतार्यावतारणम् । वस्त्राद्यैर्वस्तुभिर्भूरि, लोको राजादिकोऽवदत् ॥ ३१ ॥

तानन: ॥ ४४ ॥ इतश्चोचे कुमार्येषा, क स वीरः कलानिधिः । मत्पितुः सह दुःखेन, स्तम्भो येन विदारितः ॥ ४५ ॥ जल्पन्तीति मृदुः स्तम्भस्फालीमध्याद्विनिर्ययौ । वेगवत्योपमात्राऽऽशु, दत्तहस्ताऽपसृत्य सा ॥ ४६ ॥ धात्र्या संदर्शिते स्तम्भद्विधाकरणकर्मठे । क्षिपन्ती पुरुषे स्नेहसाराणि नयनानि च ॥ ४७ ॥ लोकानां चित्तसन्तोषं, ददती गमनेन च । भञ्जती भूभुजां मूलात्तां मनोरथमालिकाम् ॥ ४८ ॥ धृतगान्धर्विकाकारमारविभ्रमधारिणः । महाबलकुमारस्य, कण्ठे मालामलोठ्यत ॥ ४९ ॥ पञ्चभिः कुलकम् । अथो मिथो नरेन्द्रास्ते, तद्रूपेण चमत्कृताः । वदन्ति स्म परीक्षाहो, कुमार्या इह कीदृशी ॥ ५५० ॥ यदेषूत्तमवंश्येषु, राजपुत्रेषु सत्स्वपि । अज्ञातकुलवंशादिर्गत्वा गान्धर्विको वृतः ॥ ५१ ॥ ततो वयं सहिष्यामो, नैवमेनं पराभवम् । हत्वा गान्धर्विकं तेन, गृहीष्यामः पतिंवराम् ॥ ५२ ॥ इति सम्भूय ते सर्वे, यावत्तं हन्तुमुद्यताः । तावत् श्वशुरसैन्येन, वेष्टितो वैणिकः क्षणात् ॥ ५३ ॥ वज्रसारं तदेवाशु, चापमादाय लीलया । आविश्चक्रे कुमारः स्वं, बाणवर्षणविक्रमम् ॥ ५४ ॥ महाबले महाबाहौ, तस्मिन्निर्मति भूभुजः । लगुडे पतिते काका इव नेशुर्दिशोदिशम् ॥ ५५ ॥ अत्रान्तरे कुमारः स, रोमाञ्चकवचं वहन् । एकेन भट्टपुत्रेण, दृष्टःपूर्वमबुध्यत ॥ ५६ ॥ पेठे तेनेत्ययं सूनुः,

जनैः ॥ ६९ ॥ प्रावर्त्तन्त महे तत्र, सज्जनानां परस्परम् । विलेपनानि किं मूर्त्ता, अनुरागा बहिःस्थिता ॥ ५७० ॥ सिक्ता दानाम्बुना राज्ञा, यशोवल्ली तदा तथा । प्रसरन्त्या यथा तस्यास्तुच्छोऽभूद्विश्वमण्डपः ॥ ७१ ॥ विनिघ्नन् श्रुतिमर्माणि, तदा तूर्यरवो महान् । चतुरक्षांश्चकारोच्चैर्जीवान् पञ्चेन्द्रियानपि ॥ ७२ ॥ स्थिरास्थिराणि लोकानां, मनः शीर्षाणि कुर्वती । मधुरा विस्तृता गीतिर्गन्धर्वाणामिहोत्सवे ॥ ७३ ॥ नृत्यन्नारीत्रुटद्धारमौक्तिकैर्मण्डपाजिरम् । कुङ्कुमद्रवसंसिक्तं, बभौ हर्षाङ्कुरैरिव ॥ ७४ ॥ सारशृङ्गारधारिण्यः, कोकिलामधुरस्वराः । जगू रङ्गेण कामिन्यः, सधवा धवलान्यपि ॥ ७५ ॥ वधूवरतनून्यस्तं, बभौ चान्दनलेपनम् । तरङ्गितं नु लावण्यं, नुन्नं यौवनवायुना ॥ ७६ ॥ वधूवरं सदोदारं, भूषितं भूरिभूषणैः । कल्पवल्लीकल्पवृक्षश्रियं तदवहत्तदा ॥ ७७ ॥ आरक्तसूत्रबद्धैक-मदनाख्यफलौषधैः । ताभ्यां भोक्तुं सरागः किं ?, स्नेहग्रन्थिः करे कृतः ॥ ७८ ॥ वेदध्वनौ प्रवृत्तेऽथ, भट्टानां च जयारवे । मङ्गले क्रियमाणे च, वेदी ताभ्यामलङ्कृता ॥ ७९ ॥ वेद्यङ्गानि व्यराजन्त, चत्वारि परितस्तयोः । सेवा-वसरमिच्छन्तः, पुरुषार्थाः स्थिता इव ॥ ५८० ॥ ज्वलनः प्रज्वलंस्तत्र, नूनं बभौ तयोर्द्वयोः । नृत्यन्नवानुरागोऽयं, बहिर्भूत्वा प्रमोदतः ॥८१॥ कारिते विधिना तत्र, विधिशेषे पुरोधसा । निष्प्रत्यूहं प्रववृते, तत्पाणिग्रहणोत्सवः ॥ ८२ ॥

करभि, प्रगुणीकारयाम्यहम् । स्वस्थानेषु नृपान् क्रुद्धान्, सत्कृत्य प्रेषयाम्यहम् ॥ ९६ ॥ इत्युदित्वा गते भूपे, प्रोक्तकार्यचिकीर्षया । कुमारः स्माह हे कान्ते !, जातं तावदभीप्सितम् ॥ ९७ ॥ परिणेष्याम्यहं साक्षात्, त्वां दत्तां जनकादिभिः । प्रतिज्ञेति कृता याऽभूत्, मया साऽप्यद्य पूरिता ॥९८॥ मिलिताभ्यां तदा किं त्वावाभ्यां भट्टारिकागृहे । कार्योत्सुकतया स्तोका, स्वस्ववार्त्ता प्रकाशिता ॥ ९९ ॥ इदानीं सा पुनर्वार्त्ता, स्फुटा वाच्या परस्परम् । यावदायाति भूपालः, प्रयाणप्रेरणाय मे ॥ ६०० ॥ इतस्तत्रागता वेगवती धात्री तमब्रवीत् । किमिदं देवताकृत्यं, किं वान्यत्कथय स्फुटम् ॥ १ ॥ ऊचे मलयसुन्दर्या, गुह्यस्थानमियं मम । अतो निःशङ्कमाख्याहि, वेगवत्या ममापि च ॥ २ ॥ कथयित्वा ततः सर्वं, मुद्राप्रक्षेपणादिकम् । द्वितीयदिवसे सायं, यावत्तत्र कृतं पुरा ॥ ३ ॥ कुमारः कथयामास, श्रूयतामग्रतः प्रिये !। कार्यसिद्धिकृते यद्यन्, मयाऽत्र विहितं निशि ॥ ४ ॥ कृत्वा सायं पुरो राज्ञो, मन्त्रसाधनकैतवम् । किञ्चिद्द्रविणमादाय, निर्गतोऽहं नृपान्तिकात् ॥ ५ ॥ गृहीत्वा तेन वित्तेन, तक्षोपकरणादिकम् । कर्पूरवर्णकाद्यञ्च, गतो भट्टारिकागृहे ॥ ६ ॥ ये अन्तःशुषिरे दृष्टे, तदोर्व्यौ काष्ठफालिके । रमणीयतमे कामं, तक्षित्वा ते मया कृते ॥ ७ ॥ तयोर्मध्ये मया नष्टा, कीलिकाऽथ विनिर्मिता । उर्द्ध्वभागे तथा चैषा, गूढा यन्त्र-

स्वामिन्!, शिक्षां ते दधती हृदि । पुंरुपेण ततः स्थानात्, गताऽहं पुरमन्तरा ॥ २१ ॥ पृच्छन्त्या मगधाऽऽवासं, भ्रमन्त्या तत्र वेश्मसु । एकस्मिन् मगधा दृष्टा, मया देवकुले तु सा ॥ २२ ॥ परमेकेन धूर्त्तेन, क्षिप्ता सा सङ्कटे दृढे । लभते चलितुं नापि, का कथा भोजनादिके ! ॥ २३ ॥ मया पृष्टाऽथ साऽऽचख्यौ, सगद्गदमिदं वचः । अहो सत्पुरुषाऽहं किं, ब्रवीमि प्रतिभोज्झिता ? ॥ २४ ॥ उपविष्टास्म्यहं यावदात्मीयमन्दिराजिरे । तावदेष समागत्य, धूर्त्तः पार्श्वे ममाऽऽसितः ॥ २५ ॥ हास्येनोक्तं मया नैष, ज्ञातो धूर्त्तशिरोमणिः । संवाहय ममाङ्गं भोः, तुभ्यं दास्यामि किञ्चन ॥ २६ ॥ अनेन मर्दितं मेऽङ्गं, चतुःसंवाहनाक्रमात् । तुष्टयाऽथ मयाऽभाणि, भोजनं कुरु सुन्दर ! ॥२७॥ एष स्माहाशनेनालमुक्तं किञ्चन देहि मे । वस्त्रं द्रमशताद्यञ्च, मानितं क्रमतो मया ॥ २८ ॥ न गृह्णाति किमप्येष, धूर्त्तः किञ्चन याचते । अतोऽद्याहं धृताऽनेन, दत्ते च चलितुं न हि ॥२९॥ ततो नाथ ! मया ध्यातं, पतिताया महापदि । अस्याः सेत्स्यति मे कार्यमुपकारे कृतेऽधुना ॥ ६३० ॥ मगधाया मया किञ्चित्कथयित्वा ततः श्रुतौ । पश्चात्तौ गदितौ गत्वा, भोजनं कुरुतं युवाम् ॥ ३१ ॥ आगन्तव्यं युवाभ्यां हि, तृतीये प्रहरे पुनः । भञ्जनीयो मयाऽवश्यं, विवादो युवयोरयम् ॥ ३२ ॥ महाबलो जगादाथ, विवादो विषमस्तयोः । कथं भग्नस्त्वया मङ्क्षु, सोवाच

व्यजिज्ञपत् । प्रसद्य सत्पुमन् ! वार्ता, कर्तव्या न बहिः क्वचित् ॥ ४६ ॥ राज्ञी कनकवल्येषा, कूटं कृत्वा नृपात्मजाम् । मारयामास भूपेन, वैरिणीव निरागसम् ॥ ४७ ॥ कूटेऽथ प्रकटीभूते, वीक्ष्यमाणा नृपेण सा । पूर्वस्नेहेन मे गेहे, रजन्यामेत्य तस्थुषी ॥ ४८ ॥ कृत्वा प्रसादमेतां तत्, ज्वलन्तीं गड्डुरीमिव । त्वं सत्पुरुष ! मे गेहात्, निष्काशय कथञ्चन ॥ ४९ ॥ मयोचे नाथ ! यद्येनां, गृहान्निष्काशयामि ते । ततो मे स्यान्महद्वैरं, साम्प्रतं सार्द्धमेतया ॥ ६५० ॥ अन्यच्चाहमिमां कर्षन्, ग्रासश्चेन्नृपपूरुषैः । पतिष्यावस्तदानर्थजाले ह्यावामुभावपि ॥ ५१ ॥ परं तवोपरोधेन, करिष्ये सर्वमप्यदः । मेलये रहसि त्वं तु, रजन्यामद्य तां मम ॥ ५२ ॥ तुष्टा सा जेमयामास, मामथो गुरुभक्तितः । एकान्ते निशि जातायां, मेलिता सा तया मम ॥ ५३ ॥ पश्यन्ती मा च जल्पन्ती, नर्मवाक्यान्यनेकशः । कामार्थं प्रार्थयामास, सा विद्धा कामसायकैः ॥ ५४ ॥ मयाऽप्युक्तं वयस्यो मे, वल्लभो रूपमन्मथः । भार्यार्थी विद्यते किन्तु, कार्येणाद्य गतः क्वचित् ॥ ५५ ॥ आगामिन्यां रजन्यां तु, सङ्केतोऽस्ति कृतो मम । गोलातरङ्गिणीतीरे, तेन भट्टारिकागृहे ॥ ५६ ॥ आगच्छेस्त्वं ततस्तत्र, सोऽप्यायास्यति निश्चितम् । तर्हि सुष्ठुतरं योगो, युवयोर्मिलति द्वयोः ॥ ५७ ॥ अन्यथा मनसी नूनं, मिलिते स्तस्तवापि मे । तया प्रोक्तं युवां

सङ्केतस्थानमायान्ती, भ्रष्टाऽहं मूलमार्गतः ॥ ७१ ॥ भ्रामं भ्राममुन्मार्गेण, तदा तत्राहमागता । मिलिता पुण्ययोगेन तव हारकथार्थिनः ॥ ७२ ॥ स्वयं सा कनकवती, गृहीत्वाऽऽहारमेष्यति । अत्र त्वां पतिमिच्छन्ती, मयेति कथितं तव ॥ ७३ ॥ नार्येदृशा समं वक्तुमपि न युज्यते मम । इत्युक्त्वा तां च मे शिक्षां, दत्त्वा स्वामी तिरोऽभवत् ॥७४॥ इतश्चागता कनकवतीत्यालापिता मया । आगच्छ निभृता तिष्ठ, क्षणं सन्त्यत्र तस्कराः ॥ ७५ ॥ तव पार्श्वेऽस्ति यत्किञ्चित्, तत् सर्वं मे समर्पय । येन रक्षाम्यहं भीत्या, तदानीं च तयाऽर्पितम् ॥ ७६ ॥ लक्ष्मीपुञ्जं महाहारं, वरमेकं च कञ्चुकम् । तस्य मध्यान्मयाऽऽदाय, शेषमेकत्र मेलितम् ॥ ७७ ॥ मध्ये तस्करमञ्जूषं, स क्षिप्तो ग्रन्थिको मया । सा चोक्ता तस्करा एते, यावद्गच्छान्ति सुन्दरि! ॥ ७८ ॥ तावत्त्वं विश मञ्जूषामध्ये साध्वसकातरा । प्रविष्टायां ततस्तस्यां, मया दत्तं च तालकम् ॥ ७९ ॥ आकार्य स्वामिनं मातुर्मञ्जूषां तामुत्पाट्य च । क्षिप्त्वा मध्येसरिद्वैरमावाभ्यां वालितं तदा ॥ ६८० ॥ स्वनिष्ठ्यूतेन भालं मे, स्वामिना मर्दितं ततः । जातं मलयसुन्दर्या, रूपं स्वाभाविकं च मे ॥ ८१ ॥ एतस्यानुज्ञया मातुर्वपुर्लिप्त्वा विलेपनैः । परिधाय दुकूले ते, कोटरासे च कुण्डले ॥ ८२ ॥ तस्यास्तं कञ्चुकं हारं, लक्ष्मीपुञ्जं च हृद्यहम् । बिभ्राणा वरमालां च, करे काष्ठदले स्थिता ॥ ८३ ॥ युग्मम् । भवत्या धीरया भाव्य-

मित्थमित्थं भविष्याति । एवमेव च कर्त्तव्यं, सर्वं सुन्दरि ? तत्र तु ॥८४॥ वादयिष्याम्यहं तत्र, वीणां किन्तु स्वयंवरे । यदा शृणोसि वीणायाः, स्वरं तं त्वं विचक्षणे ! ॥ ८५ ॥ तदेमाः कीलिका नष्टाः, कर्षणीयास्त्वया किल । इत्युक्त्वा स्वामिनाऽऽयोजि, द्वितीयं दारुणो दलम् ॥ ८६ ॥ त्रिभिः कुलकम् । दत्ताश्च कीलिका नाथ!, नाहं जानाम्यतः परम् । ततः प्रसीद जल्प त्वं, किं किं देव! कृतं त्वया ! ॥ ८७ ॥ महाबलो बभाणाथ, मया स्तम्भोऽनु चित्रितः । तथाऽऽशु वर्णकैश्चित्रैर्न किञ्चिज्ज्ञायते यथा ॥ ८८ ॥ शेषं तद्वर्णकाद्यन्तु, क्षिप्तं गोलानदीजले । इतश्च ते समायाता, महाचौराः सलोप्त्रकाः ॥ ८९ ॥ पश्यन्तस्तं समञ्जूषं, चौरं यान्त इतस्ततः । आभाषिता मया चौरास्तत्सङ्केतेन ते तदा ॥ ६९० ॥ विश्वस्तैस्तैरहं पृष्टः, समञ्जूषं मलिम्लुचम् । ताम्बूलदानपूर्वं ते, पुनश्चौरा मयोचिरे ॥ ९१ ॥ नीत्वा स्तम्भं यदीमं प्राक्, प्रतोलीद्वारसन्निधौ । यूयं मुञ्चथ युष्मांस्तं, तस्करं तर्ह्यहं ब्रुवे॥९२॥ तथेत्युक्त्वा ततो लोप्त्रं, तैःक्षिप्त्वा च नदीतटे । सम्भूयोत्पाटितः स्तम्भः, पुनरागत्य तस्करैः ॥ ९३ ॥ मया तत्पृष्ठलग्नेन, पूर्वगोपुरसन्निधौ । स्थानके वाञ्छिते स्तम्भो, मोचितोऽतिप्रयत्नतः ॥ ९४ ॥ तत्र क्षिप्तो वराकः सः, मयाऽसौ मृततस्करः । ध्यात्वेति हृदि चौराणां, तेषां दत्तं मृषोत्तरम् ॥९५॥ अहो तेनातिलुब्धेन, मञ्जूषायाः कथञ्चन । उद्घाट्य तालकं सर्वं, गृहीतं भवतां

धनम् ॥ ९६ ॥ प्रवाहे तारितां नद्या, मञ्जूषामधिरुह्य ताम् । ततः स तस्करो मध्ये, नदीवेगेन निर्ययौ ॥ ९७ ॥ मया पृष्टमिदं सर्वं, छन्नेनाभ्यर्णवर्त्तिना । ततस्तैर्भणितं चौरैः, सत्यं ज्ञातं स्फुटं त्वया ॥ ९८ ॥ यावन्निशाऽस्ति तावत्स, यास्यत्येवं प्रगे पुनः । त्यक्त्वा पेटां गृहीत्वा च, तत्सर्वं क्व गमिष्यति ? ॥ ९९ ॥ यत्र वा तत्र वा यातु, मिलिष्यति कदापि न । इत्युक्त्वा दस्यवस्तेऽपि, निर्ययुर्मम पार्श्वतः ॥ ७०० ॥ अहं तु नातिदूरस्थः, कुर्वन् स्तम्भस्य रक्षणम् । प्रभातं यावदस्थां प्राग्, प्रतोलीद्वारसन्निधौ ॥ १ ॥ स्तम्भं वीक्षितुमायाते, तत्र राजनरे द्रुतम् । अलक्षितो गतो राजसमीपेऽहं प्रिये ! ततः ॥ २ ॥ इत्याद्याख्याय तेनोचे, पुनश्चौरोऽधुना स चेत् । निष्काश्यते ततः स्थानात्, तदा भवति सुन्दरम् ॥ ३ ॥ सोऽन्यथा पृथिवीस्थानं, गते मयि मरिष्यति । पापं तस्यापि सर्वं मे, चटिष्यति सुलोचने ! ॥ ४ ॥ तत्त्वं तिष्ठात्र यावत्त्वं, कृष्ट्वाऽऽयामि च तस्करम् । सोचे स्थास्याम्यहं नैव, गमिष्यामि त्वया सह ॥ ५ ॥ यद्यम्बाऽऽयाति मत्पूर्वं, राजा वाच्यस्त्वयेति तत् । उपयाचितमत्रासीत्, प्राक्कुमारेण मानितम् ॥ ६ ॥ गोलानदीतटे देवीं, गतोऽस्ति वन्दितुं ततः । महाबलकुमारः सः, शीघ्रमेवागमिष्यति ॥ ७ ॥ इत्युक्त्वा वेगवत्या स, कुमारश्चलितस्ततः । सार्द्धं मलयसुन्दर्या, कराभ्यां वार्यमाणया ॥ ८ ॥ त्रिभिः कुलकम् ।

जन्मान्धता पश्चात्, न पुनर्नेत्रनाशनम् ॥ २१ ॥ वैरिणा किं हतौ किं वा, निहितौ विषमे क्वचित् । दम्पती तौ हतौ किं वा ?, हाहा न ज्ञायतेऽपि किम् ॥ २२ ॥ किं वा वीरः पुनः कोऽपि, महाबलमिषादिह । कन्यामुद्वाह्य स्वच्छन्दं, गृहीत्वा स्वगृहं ययौ ॥ २३ ॥ भ्रान्तिमुत्पाट्य निशङ्कं, किं कुमारीकुमारयोः । कौचिन्निवार्य मृत्योर्मा, क्रीडां कृत्वा गतौ क्वचित् ॥ २४ ॥ तत्किं करोमि ? यामि क ?, जल्पन्निति नरेश्वरः । यावत्तस्थौ विमूढात्मा, मग्नश्चिन्ताभराम्बुधौ ॥ २५ ॥ तावद्वेगवती स्माह, देव ! धीर ! विनिश्चितम् । महाबलः स एषैव, सैषा मलयसुन्दरी ॥ २६ ॥ किन्तु रात्रौ बहिर्यातौ, पातयित्वा च्छले बलात् । हतौ केनापि देवेन, वेति सम्भाव्यते ध्रुवम् ॥ २७ ॥ ततो देशान्तरारण्यनदीपर्वतभूमिषु । विलोकयतु सर्वत्र, सम्प्रेष्य निपुणान्नरान् ॥ २८ ॥ पृथ्वीस्थानपुरे पूर्वं, शुद्धिं कारयताऽचिरात् । तत्रोपायेन केनापि, तौ भवेतां गतौ यदि ॥ २९ ॥ इमं व्यतिकरं सर्वं, सूरपालमहीपतिम् । ज्ञापयताऽऽशु यत्सोऽपि, समदुःखो विलोकते ॥ ७३० ॥ साधु साधु तवैषा धीः, साधूपायस्त्वयोदितः । इति प्रशंसता तेन, सर्वं तत्कथितं कृतम् ॥ ३१ ॥ दत्त्वाऽथ शिक्षां मलयादिकेतुर्नामा कुमारः प्रहितो नृपेण । श्रीसूरपालस्य नरेश्वरस्य, वृत्तान्तमाख्यातुममुं समग्रम् ॥ ३२ ॥

इतिश्रीजयतिलकसूरिवि० ज्ञानरत्नोपा० मलयसुन्दरीचरिते तत्पाणिग्रहणप्रकाशनो नाम द्वितीयोद्देशः ॥

कुमारेण, पुरो मातुरितीरितम् ॥ १२ ॥ चेत्पञ्चरात्रिमध्ये न, हारं हस्तेऽर्प्पयामि ते । तदाऽहं प्रविशाम्यग्नौ, मातर्ज्वाला-कुले खलु ॥ १३ ॥ मात्रापि भणितं वत्स!, तं हारं न लभे यदि । दिनपञ्चकमध्येऽहं, निश्चयेन म्रिये तदा ॥१४॥ नासीत्तस्य कुमारस्य, शुद्धिर्हारानुयायिनः । दिवसः पञ्चमः सूर्योदये किल भविष्यति ॥ १५ ॥ तस्यामलभमानायां, कुमारं हारमप्यसुम् । मृत्यवे तिष्ठमानायां, समायातोऽस्म्यहं ततः ॥ १६ ॥ किं विषेण जलेनाथ ?, शस्त्रघातेन वाऽग्निना । पातेनोद्बन्धनेनापि, न जाने सा मरिष्यति ॥१७॥ बहुलोकयुतस्तां तु, नृपोऽप्यनु मरिष्यति । शृण्वन्निति कुमारोऽपि, कोटरस्थो व्यचिन्तयत् ॥ १८ ॥ नूतमेते सुराः केऽपि, प्रजल्पन्ति परस्परम् । ततः सत्यमिदं वाक्यं, नैते वितथवादिनः ॥ १९ ॥ अहो विगतसत्योऽहं, वर्त्ते जीवन्निहैव हि । मम तत्र कुलं सर्वं, दुःखार्त्तं क्षीयते पुनः ॥ २० ॥ पुनर्जगाद भूतोऽथ, गम्यते तत्र साम्प्रतम् । कौतुकं वीक्ष्यते कामं, रक्तौघः स्वाद्यते तथा ॥ २१ ॥ मुक्तः सर्वैश्च हुङ्कार, उत्पपात वटस्ततः । वटकोटरसंस्थौ तौ, कुमारौ द्वौ च जग्मतुः ॥२२॥ गच्छन् वेगेन सम्प्राप, पृथ्वी-स्थानपुरं वटः। क्षणेनालम्बशैलस्य, मेखलायां च तस्थिवान् ॥ २३ ॥ नगरासन्नवर्त्तिन्या, गोलानद्यास्तटे स्थितम् । धनञ्जयस्य यक्षस्य, भवनं ते सुरा ययुः ॥ २४ ॥ महाबलोऽपि तं दृष्ट्वा, प्रदेशमुपलक्ष्य च। जगादाद्यापि पुण्यानिः

तस्य तं वेषमालोक्य, विस्मितास्ते नृपादयः ॥ ३८ ॥ ऊचुश्च कः पुमानेषोऽदृष्टपूर्वोऽतिरूपवान् । महाबलस्य सर्वोऽयं, वेष एतस्य निश्चितम् ॥३९॥ अथावादीत्तलारक्षो, गोपुरं प्रविशन्नयम् । दृष्टः पृष्टश्च बहुधा, न किञ्चिद्दत्तमुत्तरम् ॥४०॥ पृष्टो राज्ञाऽथ सैषोऽपि, कोऽसि त्वं कस्य वा कुतः? । सोऽचिन्तयन्निजे चित्ते, सत्यं वक्ष्यामि चेदहम् ॥ ४१ ॥ प्रत्ये-ष्यति तथाप्येते, न मे वचसि सम्प्रति । येनावयोरसंभाव्यो, वृत्तान्तः सकलोऽप्ययम् ॥ ४२ ॥ कुमारेण विना तस्मा-द्वृत्तान्तः कोऽपि न स्वकः । प्रकाश्योऽत्र मया नूनं, यद्यद्भाव्यं तदस्तु मे ॥ ४३ ॥ अथोचे तेन राजेन्द्र !, तस्य मित्रमहं प्रियम् । महाबलेन तेनैष, वेषो दत्तोऽखिलोऽपि मे ॥ ४४ ॥ शूरपालोऽवदत्कुत्र, हंहो ! सोऽस्ति महाबलः । सोऽवोचदत्र कुत्रापि, स्वेच्छाचारेण तिष्ठति ॥ ४५ ॥ नृपोऽवोचत्कुमारश्चेत्, क्वापि पुण्यैर्भवेदिह । तत्किमागत्य ना-स्माकमह्नायोत्को मिलेदहो ॥ ४६ ॥ किन्तु नास्ति कुमारोऽत्र, पतितः क्वापि सङ्कटे । बहुधा वीक्षितोऽप्यत्र, प्राप्तः कुत्रापि येन न ॥ ४७ ॥ यदि त्वं स्नेहलं मित्रं, कुमारस्य सुतस्य मे । तत्किं कोऽपि जनोऽस्माकं, मध्ये त्वां नोप-लक्षयेत् ? ॥ ४८ ॥ इत्याद्युक्तोऽपि यावत्स, वदेत्किञ्चन नोत्तरम् । ततो राज्ञा पुनः प्रोचे, हुं ज्ञातं घटते ह्यदः ॥ ४९ ॥ अदृष्टं यद्गतं पूर्वं, कुमारवसनादिकम् । तत्सर्वं तेन चौरेण, प्रचण्डेन हृतं खलु ॥ ५० ॥ यः कल्पे

म्भरैः ॥ ६३ ॥ देवी विज्ञपयत्येवं, देव ! न ज्ञायते क्वचित् । महाबलः कुमारः स, तावत्सर्वगुणाकरः ॥ ६४ ॥ तदेवाद्य दिनं तेन, यदुक्तं पञ्चमं तदा । मृतो नूनं कुमारस्तदागतोऽभूदिहान्यथा ॥ ६५ ॥ लक्ष्मीपुञ्जस्य हारस्य, शुद्धिस्तस्यापि नाभवत् । मृते तस्मिन् कुमारे मे, हारप्राप्तिः सुदुर्लभा ॥ ६६ ॥ अलब्धे दुर्लभे हारे, कुमारेऽथ महाबले । न क्षमा जीवितं धर्तुं, दुःखभारेण भारिता ॥ ६७ ॥ भृगुपातं करिष्येऽहं, गत्वाऽलम्बगिरौ ततः । क्षन्तव्योऽस्तु त्वया सर्वोऽधुना दुर्विनयो मम ॥ ६८ ॥ नृपोऽवोचदथो देवी, वाच्या मम गिरा त्वया । समानं मे तवाप्येतत्, दुःखं देवि ! सुदुस्सहम् ॥ ६९ ॥ मया प्रस्थापिताः सन्ति, कुमारं वीक्षितुं नराः । दर्शं दर्शं समायान्तु, तावत्सर्वेऽपि ते त्विह ॥ ७० ॥ प्रवृत्तिं तस्य चेत्काञ्चित्, जल्पन्ति ते कथञ्चन । लभ्यश्च दिवसो देवि !, कुमारेणाद्य पञ्चमः ॥ ७१ ॥ कुमारस्याद्य शुद्धिर्न, यदि कापि भविष्यति । शरणं मेऽपि ते मार्गः, प्रभाते त्वं त्वरस्व मा ॥ ७२ ॥ तस्य कुण्डलवस्त्राणि, लब्धान्यद्यैव देवि ! हे । अपूर्वपुरुषादस्मात्, कुमारस्य मया खलु ॥ ७३ ॥ अर्पयैतान्यये देव्यै, कथनीयं तथा त्वया । यथैतानि कुमारोऽपि, हारोऽप्यत्र तथैष्यति ॥ ७४ ॥ अनेन कारयिष्यामः, पुंसा दिव्यं तु साम्प्रतम् । इत्युक्ते तेन सा दासी, देव्यै गत्वाऽखिलं जगौ ॥ ७५ ॥ तेषु कुण्डलवस्त्रेषु, तया दत्तेषु विस्मिता

देव्यब्रवीत्किमेतद्भो !, लब्धान्येतान्यहो कुतः ? ॥ ७६ ॥ तेषां कुण्डलवस्त्राणां, लाभवृत्तान्तमाह सा । ततो जगाद सा देवी, हर्षशोकाकुला समम् ॥ ७७ ॥ अभीष्टो मत्कुमारस्य, किं कोऽप्येष पुमानिह । शुद्धिं कामपि गदितुं, कुतोऽप्यद्य समागमत् ॥ ७८ ॥ किंवा केनापि रिपुणा, छलघातेन तं सुतम् । हत्वा कुण्डलवस्त्राणि, गृहीतान्यत्र कुत्रचित् ? ॥७९॥ ततो गत्वेक्ष्यते सैष, दिव्येन स्यात्कथं कथम् ? । इति यक्षगृहं देवी, ययौ सा सपरिच्छदा ॥८०॥ पूर्वमेवागतस्तत्र, राजा यक्षस्य मन्दिरे । धनञ्जयस्य लोकोऽपि, कौतुकेनामिलत्तदा ॥ ८१ ॥ तेऽपि गारुडिका-स्तत्रायाता भूपं व्यजिज्ञपन् । देवालम्बाद्रिच्छिद्राणि, दर्शं दर्शमनेकधा ॥ ८२ ॥ कज्जलाभो महाकायः, फूत्कारैरति-दारुणः । एष सर्पो घटे क्षिप्त, आनिन्येऽस्माभिरत्र हि ॥ ८३ ॥ सार्हिं धनञ्जयस्याग्रे, मोचयित्वाऽथ तं घटम् । राज्ञोचे तं नरं शीघ्रमत्रानयत रे भटाः ! ॥ ८४ ॥ खड्गव्यग्रकरैर्बाढं, वेष्टितः सुभटैः पुमान् । शुचीभूतः स आनीतस्तत्र रूपश्रियाऽधिकः ॥ ८५ ॥ दृष्ट्वा तं चिन्तयामास, देवी लोकोऽप्यहो कथम् ? । किलैतस्यैतयाऽऽकृत्या, भवत्येष मलिम्लुचः ॥ ८६ ॥ उत्तिष्ठते जलाद्वह्निरिन्दोरङ्गारवर्षणम् । अमृताद् यदि दाहोऽपि, कार्यमस्मादिदं ततः ॥ ८७ ॥ इदं दिव्यं नरस्यास्य, न दातुं देव ! युज्यते । राज्ञोचे कोऽपि दोषो न, दिव्ये दत्तेऽत्र भो जनाः ! ॥८८॥

शुद्धानामिह दिव्येन, वर्णिका चटति ध्रुवम् । सुवर्णस्येव जात्यस्य, निर्गतस्याग्निमध्यतः ॥८९॥ पुंरूपा वनिता साऽथ, स्मरन्ती हृदये तदा । परमेष्ठिमहामन्त्रं, श्लोकार्थकृतनिश्चया ॥ ९० ॥ घटमुद्घाट्य जग्राह, महासर्पं स्थिराशया । करेण सर्वलोकस्य, चमत्कारविधायिनी ॥ ९१ ॥ युग्मम् । सर्प्पोऽपि रज्जुसदृशो, भूत्वा तस्थौ तदाननम् । स पश्यन् स्नेहभावेन, वीक्षितो विस्मितो जनैः ॥ ९२ ॥ ततो निःशेषलोकेन, शुद्धः शुद्ध इति द्रुतम् । जल्पता युगपत्ताला, पाणिभ्यां पातिताऽऽत्मनः ॥ ९३ ॥ तेनाहिना करात्तेन, मुखादाकृष्य लीलया । तस्याः कण्ठे महाहारः, स्वमुखेनैव चिक्षिपे ॥ ९४ ॥ राजा लोकश्च सर्वोऽपि, विस्मितो हारदर्शनात् । उपलक्ष्य च तं हारं, मिथो वक्त्राणि दृष्टवान् ॥९५॥ अहो किमेतदाश्चर्यं, देवीहारः स एव हि । लक्ष्मीपुञ्जोऽयमित्यूचे, सर्वः कोऽप्यतिविस्मितः ॥९६॥ लिलिहे पन्नगेनास्य, पुंसो भालं स्वजिह्वया । सहसा सोऽभवद्दिव्यरूपा स्त्री तरुणी ततः ॥९७॥ विस्तार्य परितस्तस्याः, फणां सर्पेण तस्थुषा । पुंसश्छत्रधरस्यैकं, क्षणं लीलाविडम्बिना ॥ ९८ ॥ अपूर्वमिदमाश्चर्यं, पश्यन्नेत्रैर्जनस्तदा । वक्तुं शशाक नो किञ्चिदेवमेव स्थितः परम् ॥ ९९ ॥ नृनाथोऽपि महाभीत्या, कम्पमानोऽब्रवीदिदम् । मूर्खेणेदं हहा कार्यमयुक्तं विहितं मया ॥१००॥ वारयन्नपि लोकोऽयं, देवी चापि न मानिता । उत्थापितो मयाऽनर्थः, स्फुट-

सञ्जातं, रूपं स्वाभाविकं मम । निष्ठ्यूतेन कुमारस्य, भालदेशनिवेशिना ॥ १४ ॥ अधुना त्वहिजिह्वाया, लेहेनन बभूव तत् । हारोऽपि मेऽर्पितस्तेन, स किं सर्पोऽभवत्ततः? ॥१५॥ न त्वेतद् घटते सम्यग्, परमार्थं न वेद्म्यहम् । घटते यावदेवात्र, तावदेव वदामि च ॥१६॥ इदं जगाद सा बाला, लज्जानम्रमुखी ततः । एतावदेव जानामि, नान्यत् किञ्चिन्नरेश्वर ! ॥ १७ ॥ अहं चन्द्रावतीस्वामिश्रीवीरधवलात्मजा । अतीवेष्टा पितुर्देव !, नाम्ना मलयसुन्दरी ॥१८॥ बभाषे नृपतिर्नाहो, युक्तियुक्तमिदं वचः । यतोऽन्यत्पूर्वमाख्यायि, नररूपस्थयैतया ॥ १९ ॥ चन्द्रावतीपुरी क्वास्ते, श्रीवीरधवलस्य सा । क्व चेदं पृथिवीस्थानमेषा कैकाकिनी पुनः ? ॥ १२० ॥ भविष्यति कुतोऽप्यस्य, वृत्तान्तस्य प्रकाशनम् । एषाऽपि यदि सत्यास्ति, नार्येव वरवर्णिनी ॥ २१ ॥ आगमिष्यति शीघ्रं तत्, कोऽप्यस्याः पृष्ठतो ननु । सत्कृत्यैतां तदा तस्मै, दास्यामो दिव्यकामिनीम् ॥ २२ ॥ देवि ! त्वं सह हारेण, लक्ष्मीपुञ्जेन साम्प्रतम् । सुखेनैतां धर स्वीयपार्श्वे चटुललोचनाम् ॥ २३ ॥ हारोऽपि चटितो देवि !, मध्येपञ्चाहमेष ते । सुखी दुःख्यथवा क्वापि, सुतोऽभूत्सत्यसङ्गरः ॥ २४ ॥ मोक्तव्योऽध्यवसायस्तन्मरणस्य त्वयाऽधुना । हाराप्राप्तौ कुमारेण, अङ्गीकृतमभूद्यतः ॥ २५ ॥ देव्युवाच महाराज !, किमनेन करोम्यहम् । हारेण जीवितं धर्तुं, न शक्नोमि विनाऽऽत्मजम् ॥ २६ ॥

निक्षिप्ताङ्घ्रियुगत्वोर्ध्वपादश्चाधोमुखस्तथा ॥ ३९ ॥ बहुदुःखभराक्रान्तो, वल्गुल्याः कलयन् कलाम् । चौरात् स्तोकान्तरेऽदर्शि, कुमारोऽस्माभिरादृतैः ॥ १४० ॥ त्रिभिः कुलकम् । परमार्थं वयं नान्यं, जानीमः कमपि प्रभो ! । यथा दृष्टं तथा देव!, पादानामिह भाषितम् ॥ ४१ ॥ इत्याकर्ण्य नृपो देवीयुक्तः सिक्त इवामृतैः । अन्वभूद्विस्मयानन्दरसौ द्वौ युगपत्तदा ॥ ४२ ॥ त्यक्त्वा सर्वं ततो वेगात्, भृगुपातक्रियोद्यमम् । महाबलकुमारस्य, दर्शनोत्कण्ठितो भृशम् ॥ ४३ ॥ तयाऽभिनवया नार्या, पद्मावत्या च भार्यया । उत्तालं मिलिताशेषलोकेन च समन्वितः ॥ ४४ ॥ चित्ते तं वटमाधाय, प्रस्थितो भूपतिर्द्रुतम् । अपश्यच्च यथाख्यातं, कुमारं तं तथास्थितम् ॥ ४५ ॥ त्रिभिः कुलकम् । मुञ्चन्नश्रूणि लोकेन, सार्द्धं राजा जगाविति । हा वत्स ! स्वच्छचित्तैषा, दुःस्थावस्था कथं तव ? ॥४६॥ तिष्ठत्येकत्र चौरोऽयं, लम्बमानो वटद्रुमे । वत्स ! त्वमीदृशं दुःखमन्यतोऽनुभवन् पुनः ॥४७॥ धिग् धिग् राज्यमिदं सर्वं, धिग् ते दोर्दण्डविक्रमम् । यदेषा ते समायासीन्महती विपदीदृशी ? ॥ ४८ ॥ जल्पन्निति महीपाल, आह्वायान्द्वाय वार्द्धिकम् । छेदयित्वा च शाखे ते, सुखेनाकर्षयत्सुतम् ॥ ४९ ॥ पीडाभरसमाक्रान्तमक्षमं वक्तुमप्यमुम् । महाबलं सुतं वीक्ष्य, विह्वलं घूर्णितेक्षणम् ॥१५०॥ शीतलं कारयामास, वातं भूपः स्वसेवकैः । अङ्गं संवाहयामास, चिक्षे-

एव परं नास्ति, नर उत्तरसाधकः ॥ ६४ ॥ क्षणमेकं ततस्तिष्ठ, त्वं मत्रोत्तरसाधकः । साहाय्येनैष मंत्रस्ते, मम शीघ्रं हि सेत्स्यति ॥ ६५ ॥ अङ्गीकृत्य वचस्तस्य, देवाहं दयया स्थितः । खड्गमादाय वेगेन, भूत्वा चोत्तरसाधकः ॥ ६६ ॥ योगिनोक्तमथो वीर !, नार्येषा यत्र रोदिति । वटे तत्राक्षताङ्गोऽस्ति, शाखोद्बद्धो मलिम्लुचः ॥ ६७ ॥ गृहीत्वा त्वं कुमारात्रानय चौरं सुलक्षणम् । तेनेत्युक्तेऽसिना सार्ध्दं, यावत् तत्राहमीयिवान् ॥ ६८ ॥ तावन्न्यग्रोध-शाखायां, बद्धदस्योरधो भुवि । उपविष्टा मया दृष्टा, रुदत्येका वरा वशा ॥ ६९ ॥ आभाषिता च काऽसि त्वं, करुणं किञ्च रोदिषि ?। एकाकिनी श्मशानेऽत्र, किं रात्रौ भीषणे भृशम् ॥ १७० ॥ सहसा मुखमुद्घाट्य, पश्यन्ती संमुखं मम। दृष्ट्या निश्चलया साऽथ, वक्तुमेवं प्रचक्रमे ॥७१॥ हंहो ! सत्पुरुषाहं किं, मन्दभाग्या वदामि ते ?। उद्बद्धो वटशाखायां, यः पुमानत्र विद्यते ॥ ७२ ॥ स एष लोभसाराख्यो, रुद्धो मुषितनागरः। अज्ञातस्थानकोऽलम्ब-गिरिवासी मलिम्लुचः ॥ ७३ ॥ तृतीयेऽद्यतनस्याह्नो, यामे राजनरैः क्वचित् । लब्ध एष नृपेणाथ, सायमेव च घातितः ॥ ७४ ॥ एतस्याहं प्रियाऽभीष्टा, दुःखिता तेन रोदिमि । प्रत्यूषेऽद्यैव सञ्जात, आवयोरिह सङ्गमः ॥ ७५ ॥ परं स्नेहः स कोऽप्यद्यानेन प्रौढः प्रकाशितः। खाट्कुर्वन्नपि यश्चित्ते, गदितुं शक्यते नहि ॥ ७६ ॥ तथा कथं विधेहि

त्वमेकाश्लेषं ददाम्यहम् । मुखं चास्य विलिम्पामि, चन्दनेन यथा सुधीः ! ॥ ७७ ॥ तयेत्युक्ते मया देव !, कथितं कृपया तदा । भद्रे ! स्कन्धं समारुह्य, यथेष्टं त्वं समाचर ॥७८॥ समुत्पत्य मम स्कन्धमारूढा सहसाऽथ सा । शबस्योत्कण्ठिता कण्ठं, यावदालिम्पति प्रभो ! ॥ ७९ ॥ तावत्तेन शबेनास्या, दन्तैरात्ताऽशुनासिका । रसन्ती विरसं भूरि, लग्ना सा कम्पितुं ततः ॥ १८० ॥ गाढात्ताया नसस्तस्याः कर्षन्त्यास्त्रुटिता तदा । अग्रभागः शबस्यास्य, मुखमध्ये स्थितः किल ॥ ८१ ॥ ममेदं पश्यतो हास्यं, स्फुटितास्यं समागतम् । प्रजल्पितं ततस्तेन, शबेन हसता मनाग् ॥ ८२ ॥ ममेदं चरितं दृष्ट्वा, हससि त्वमहो कथम् । उद्बन्धस्यसे त्वमप्याशु, येनात्रैव वटद्रुमे ॥ ८३ ॥ एष्यन्त्यां निश्यधोवक्त्रः, स्थाताऽस्यूर्ध्वपदोऽपि च । शबस्येति वचः श्रुत्वा, भीतोऽहं तात ! मानसे ॥ ८४ ॥ ऊचुस्ते विस्मिताः सर्वे, श्रोतारश्चित्रमुत्कटम् । किं कुमार ! प्रजल्पन्ति, शबा अपि कदाचन ? ॥ ८५ ॥ कुमारेण ततोऽभाणि, तात ! जल्पन्ति नो शबाः । किन्तु केनापि देवेन, शबस्थेनेति भाषितम् ॥ ८६ ॥ नान्यथा देववाक्यं स्यात्ततस्तातेत्यहं स्मरन् । चकितो धीरचित्तोऽपि, बाढं बुद्धिसमन्वितः ॥ ८७ ॥ सापि भीकम्पमानाङ्गी, नारी त्रुटितनासिका । स्कन्धादुत्तीर्य पप्रच्छ, नामस्थानादि मां ततः ॥ ८८ ॥ मयापि कथिते सत्ये, नामस्थानादिके निजे ।

विश्वस्तमानसा साऽभूत्ततः किञ्चिन्न ममोपरि ॥ ८९ ॥ रूढायां नासिकायां तु, कुमारेत्य तवान्तिकम् । कथयिष्याम्यहं सर्वं, चौरस्त्वं कन्दरास्थितम् ॥ १९० ॥ इत्युक्त्वा सा गता तात !, ततः कृत्वा दृढं मनः । चटित्वा च वटेऽच्छोटि, पाशश्चौरगलान्मया ॥ ९१ ॥ मुक्त्वाधो मृतकं यावदुत्तीर्णोऽहं वटद्रुमात् । अपश्यं तावदुद्बद्धं, वृक्षे तत्रैव तत्पुनः ॥ ९२ ॥ चिन्तितं च मया देव्यास्तस्या मे क्षोभणक्रमः । या काचित् साधितुं तेन, आरब्धा योगिनाऽधुना ॥ ९३ ॥ ततः कथमिदं ग्राह्यं, ध्यायन्नित्यचटद्वटम् । छोटयित्वा च पाशं तत्केशग्राहमवातरम् ॥ ९४ ॥ समारोप्य ततः स्कन्धमागत्य मृतकं मया । पुरतो योगिनस्तस्य, मुमुचे न क्षतं क्वचित् ॥ ९५ ॥ महाबलकुमारस्य, चरितं शृण्वतां तदा । राज्ञो राज्ञ्याश्च लोकानां, महाकम्पः कदाप्यभूत् ॥ ९६ ॥ कदाचिद्विस्मयः शोकः, कदाचिच्च कदापि भीः । हास्यानन्दौ कदाचिच्च, कदाचिद्दुःखमप्यलम् ॥ ९७ ॥ एवं सर्वरसांस्तेषु, सर्वेष्वनुभवत्स्विह । भविष्यति पुरः किं किं, चिन्तयत्स्विति चाह सः ॥९८॥ तात ! तेन महायोगीश्वरेण मृतकं ततः । स्नपयित्वाऽऽशु सर्वाङ्गं, चर्चितं चन्दनद्रवैः ॥९९॥ ज्वलज्ज्वलनकुण्डान्ते, मण्डयित्वाथ मण्डलम् । तदन्तः स्थापयित्वा तत्, कृतोऽस्म्युत्तरसाधकः ॥ २०० ॥ कृत्वा पद्मासनं तेन, ध्यानस्तिमितचक्षुषा । तावज्जप्तो महामन्त्रो, निशान्तो यावदाययौ ॥ १ ॥ तत

उल्लङ्घ्य कुण्डे तत्पतितं मृतकं ननु । निर्विण्णः स ततो योगी, ध्यानेऽभूच्छिथिलादरः ॥ २ ॥ उत्पत्य मृतकं व्योम्नि, साट्टहास्यास्यभीषणम् । गत्वा तत्रैव न्यग्रोधे, लम्बमानं तथास्थितम् ॥ ३ ॥ अथोचे योगिना किञ्चिदागतं स्खलितं मम । सिद्धस्तेन न मन्त्रोऽयमुत्पत्यमृतकं गतम् ॥ ४ ॥ एष्यन्त्यां निशि कर्त्तव्यं, पुनर्मन्त्रस्य साधनम्। सम्यग् मया त्वयाऽप्यत्र, स्थातव्यं कृपया मम ॥ ५ ॥ साहाय्येनैष मन्त्रस्ते, कुमार ! मम सेत्स्यति । सदा परोपकारी त्वं, कुरु मे तदुपक्रियाम् ॥ ६ ॥ अङ्गीकृत्य वचस्तस्य, देवाहं तत्र तस्थिवान् । बिभ्यता भणितं तेन, योगिनाऽपीति मां प्रति ॥ ७ ॥ तिष्ठन्तं त्वां कुमारात्र, मत्पार्श्वे कोऽपि पूरुषः । राज्ञोऽन्यो वा यदि द्रष्टा, तदैवं चिन्तयिष्यति ॥८॥ केनापि छद्मना नूनं, प्रतार्यानेन योगिना । कुमारो नृपतेरेष, ग्राहितः कुष्टमानसः ॥ ९ ॥ तदेनं योगिनं हत्वा, कुमारं मोचयाम्यमुम् । अन्यथा यास्यति क्वापि, गृहीत्वैष प्रतारकः ॥ २१० ॥ अतो यदि कुमार ! त्वमुपकारं दधत् हृदि । अथाहं तद्दिनं यावद्रूपमन्यत्करोमि ते ॥ ११ ॥ कोऽपि येनाभिजानाति, न त्वामत्र प-रिभ्रमन् । ततस्तात ! मया तस्य, वचनं मानितं तदा ॥ १२ ॥ लक्ष्मीपुञ्जस्य हारस्य, प्रणाशो मम मा स्म भूत् । इति चिन्तयता हारो, निक्षिप्तो वदने मया ॥ १३ ॥ तेनाथ योगिना किञ्चित्, घर्षयित्वाऽऽशु मूलिकाम् ।

अभिमन्त्र्य च मे भालतले चक्रे विशेषकः ॥ १४ ॥ ततोऽहं कज्जलच्छायः, सञ्जातः पन्नगो महान् । दृश्यमानोऽपि सर्वेषां, जीवानां प्राणनाशनः ॥ १५ ॥ दर्शयित्वा गुहामेकां, नातिदूरे ततो मम । स्वकार्यसाधनकृते, महायोगी स जग्मिवान् ॥ १६ ॥ तत्रानिलं पिबन् यावत्, सुखेनैव स्थितोऽस्म्यहम् । तावत् गारुडिकाः केऽपि, पश्यन्तः सर्प्पमैयरुः ॥१७॥ मन्त्रेण स्तम्भयित्वाऽहं, धृतः क्षिप्तश्च तैर्घटे । समानीय च युष्मभ्यं, यक्षगेहे समर्पितः ॥१८॥ युष्माभिः स समादिष्टो, दिव्यं कर्त्तुं नवः पुमान् । निर्भयेन ततस्तेन, समाकृष्टो घटादहम् ॥१९॥ मया करधृतेनैव, हारः कृष्ट्वा सुखाभिजात् । उपलक्षितरूपस्य, तस्य कण्ठे निचिक्षिपे ॥ २२० ॥ पश्चात्सोऽभून्नरः साक्षाद्दिव्यरूपा नितम्बिनी । इत्यादि देव ! निखिलं, प्रत्यक्षं भवतामपि ॥ २१ ॥ बहुधाऽऽराध्य भीतेनालम्बशैलस्य गह्वरे । तत्रैव मोचितः सर्पः, स त्वयेति कथावधिः ॥ २२ ॥ नृपोऽथ कथयामास, कथं सोऽभिनवः पुमान् । अस्माकं पश्यतामेव, वत्साभूद्दिव्यकामिनी ? ॥ २३ ॥ कुमारः स्माह हे देव !, मध्यरात्रे तदा मया । सम्प्रासेन श्रुतो दीनः, स्वरो नार्याः कुतोऽपि हि ॥ २४ ॥ गच्छतोऽनुस्वरं तत्र, मया मुक्ता वधूस्तव । पुंरूपा कदलीगेहे, मद्वस्त्राभरणान्विता ॥ २५ ॥ ततो नवनरस्यास्यात्रायातस्य कथञ्चन । युष्माभिर्घटसर्पस्य, दिव्यं दत्तं सुदुष्करम् ॥ २६ ॥ युष्माकं भूरिपुण्येन, दिव्येनात्र नरे-

श्वर! । अहमेव सर्परूपो, विधिना ढौकितः किल ॥ २७ ॥ मया करगृहीतेन, स सम्यगुपलक्षितः । ततो भालतलं तस्य, निष्ठ्यूतेन च मर्दितम् ॥ २८ ॥ जज्ञे युष्मासु पश्यत्सु, कामिनी स नरस्ततः । इत्येष परमार्थस्तु, वृत्तान्तस्यास्य भूपते ! ॥ २९ ॥ नरेन्द्रप्रमुखाः सर्वे, सानन्दा दृष्टिमाक्षिपन् । नीरङ्ग्याच्छादिताङ्ग्या द्राग्, वध्वास्तस्या उपर्यथ ॥ २३० ॥ कुमारानुज्ञया साऽथ, ननाम श्वशुरादिकान् । तेऽपि प्रमुदितास्तस्यै, ददुः सर्वे वराशिषः ॥३१॥ मुञ्चन्न-श्रूणि धुन्वंश्च, शिरोऽवोचन्नृपस्ततः । अहो ! मया समाचेरे, स्ववध्वां शात्रवोचितम् ॥ ३२ ॥ जनो जगाद हे देव !, कार्यः खेदोऽत्र न त्वया । अपराध्याति येनैकमज्ञानं नापरं पुनः ॥ ३३ ॥ पद्मावत्या महादेव्याः, स्वोत्सङ्गे सा वधूर्धृता । भणिता च त्वया वत्से !, कथं नात्मा प्रकाशितः ? ॥ ३४ ॥ अथवाऽकारि हे वत्से !, युक्तं मौनं त्वया यतः । मन्येताघटमानं कः, कथ्यमानमपीदृशम् ? ॥ ३५ ॥ चन्द्रावती पुरी क्वेदं ?, पृथ्वीस्थानपुरं क्व च ? । कथ्यमाने त्वया कोऽत्र, प्रत्येति नररूपया ? ॥ ३६ ॥ अहो! अज्ञैस्तवास्माभिः, कीदृशं विहितं सुते ? । अभविष्यदनिष्टं चेत्, किञ्चित्तन्नो गतिश्च का ? ॥ ३७ ॥ अस्माकं कानिचिन्नूनं, पुण्यान्यद्यापि जाग्रति । सञ्जातं ते शुभोदर्कं, यतः कष्टमपीदृशम् ॥ ३८ ॥ ततोऽस्माकमयं मन्तुः, क्षन्तव्यस्तनये ! त्वया । परमार्थविदो येन, भवन्ति हि कुलोद्भवाः ॥ ३९ ॥

धन्या वत्से ! वयं सर्वमस्माकं सफलं तथा । आत्माप्युद्धूयमानोऽयं, सुखमग्नः स्थितोऽद्य वै ॥२४०॥ यत्त्वया गुण-शालिन्या, विधिनोद्ढया तथा । वध्वा सह समायातः, कुमारः सत्यसङ्गरः ॥ ४१ ॥ अथो मलयसुन्दर्यै, देवी पद्मा-वती ददौ । स्वहस्तेनैव दिव्यानि, वस्त्राण्याभरणानि च ॥ ४२ ॥ सत्कुर्वन्ती प्रशंसन्ती, बहुधाऽपि वधूं निजाम् । यावत्तस्थौ महादेवी, तावद्भूपोऽवदत्सुतम् ॥ ४३ ॥ त्वया वत्स ! विमुक्तेनालम्बशैलस्य कन्दरे । अहिरूपधरे-णानुभूतं किं किं ? महाबल ! ॥ ४४ ॥ कुमारः स्माह तत्रैव, स्थितेन गमितं मया । दिनशेषं सुखेनैव, पवनाहारकारिणा ॥ ४५ ॥ सन्ध्यायां योगिना तेन, तत्राऽऽयातेन गह्वरे । मम भालं पुनः स्वामिन्नर्क-क्षीरेण घर्षितम् ॥ ४६ ॥ स जज्ञेऽहं पुनर्देव !, नैसर्गिकवपुः पुमान् । तेनोक्तं त्वं कुमारैहि, महामन्त्रः स साध्यते ॥ ४७ ॥ पार्श्वे ज्वलनकुण्डेऽस्य, द्वावप्यावां गतौ तदा । योगिनोक्तं महावीर !, पुनरानय तं शबम् ॥ ४८ ॥ अथागत्य तथैवाथ, गृहीत्वा तत् शबं पुनः । समर्पितं मया तस्मै, योगिने मन्त्रसिद्धये ॥ ४९ ॥ स्नपयित्वा च तत्तेन, स्थापितं मण्डलान्तरा । प्रज्वालितोऽनलश्चाहं, कृतश्चोत्तरसाधकः ॥ २५० ॥ यथा यथा जजापैष, योगी मन्त्रं तथा तथा । उत्तस्थौ मृतकं तत्र, निपपात पुनः पुनः ॥ ५१ ॥ अर्द्धरात्रो ययौ तस्य,

भुजयोस्तव ? ॥ ६४ ॥ कुमारः स्माह देवाहिपुच्छं लग्नं तु लम्बितम् । इतस्ततश्चलद्दैवयोगान्मुखं ममागमत् ॥६५॥ रोषेणाथ मया तच्च, दशनैश्चर्वितं मुहुः । पीडितः पन्नगः सोऽथ, बन्धनाच्चलितः क्षणात् ॥ ६६ ॥ पतितश्च महीपीठे, न लग्नः क्वापि मे तनौ । विषापहारमन्त्राणामौषधेश्च प्रभावतः ॥ ६७ ॥ मया निर्गमितं रात्रियामयुग्मं कथञ्चन । पुनः सम्प्रति युष्माभिरापदेषा हता मम ॥६८॥ यदनेन शबेनोक्तं, संमुखं मे भयङ्करम् । अद्यैवं देव ! सञ्जातं, सत्यं तद्वचनं पुनः ॥ ६९ ॥ मया तदेष सर्वोऽपि, वृत्तान्तः कथितो निजः । भवतां तातपादाब्जमद्यासं सुकृतैर्मम ॥२७०॥ ते सर्वे जगदुर्लोकाः, अहो ! वीरशिरोमणे ! । स्तोकेनापि हि कालेनानुभूतं तत्त्वयाऽपि किम् ? ॥७१॥ शक्यते यन्न गदितुं, न श्रद्धातुं च केनचित् । कथ्यमानं च बहुधा, चित्ते माति न कस्यचित् ॥ ७२ ॥ एवंविधस्य कार्यस्य, यासि पारं त्वमेव हि । धुर्य एव वहेद्भारं, विषमे न तु तर्णकः ॥ ७३ ॥ अहो ! ते साहसं बुद्धिर्निर्भयत्वं सुधीरता । मैत्री परोपकारित्वं, कारुण्यं दक्षताऽपि च ॥ ७४ ॥ अहो ! सुकृतसंभारः, कुमारः प्राक्तनस्तव । येनात्रैवंविधा भार्याऽस्माकं च मिलितोऽचिरात् ॥७५॥ सर्वेष्वेवं प्रशंसत्सु, कुमारं तमनेकधा । नृपोऽवोच-

१ लोहित्वं

त्कुमार ! त्वं, तत्स्थानं दर्शयास्मकान् ॥ ७६ ॥ युवाभ्यां यत्र मन्त्रः स, प्रारेभे साधितुं निशि । कथं बभूव योगी स?, गत्वा तत्र विलोक्यते ॥ ७७ ॥ अनुयातस्ततः सर्वैरुदुत्थाय स भूपभूः । गत्वा तद्दर्शयामास, मन्त्रसाधकमण्डलम् ॥ ७८ ॥ यावत्सर्वेऽपि ते तत्र, लग्नाः सर्वत्र वीक्षितुम् । तावन्मध्येऽग्निकुण्डस्यापश्यन् काञ्चनपूरुषम् ॥ ७९ ॥ कर्षयित्वा च तं राजा, कोशे चिक्षेप पूरुषम् । पुनर्भवन्ति छिन्नानि, तस्याङ्गानि विना शिरः ॥ २८० ॥ सकुटुम्बोऽथ भूपालः, संप्राप्तो निजमन्दिरम् । दशाहानि पुरे तत्र, वर्धापनमकारयत् ॥ ८१ ॥ अथो मलयकेतुः स, प्रस्थितोऽनुवधूवरम् । शुद्धिं सर्वत्र कुर्वाणस्तस्य तत्र समागतः ॥ ८२ ॥ मिलित्वा भूपतेरुक्तं, तेनागमनकारणम् । राज्ञाऽपि मिलितः सोऽथ, स्वसुः स्वसृपतेरपि ॥ ८३ ॥ ताभ्यामपि प्रहृष्टाभ्यां, पित्रोः पृष्टो हि मङ्गलम् । सर्वं जगाद तद्दुःखमाविष्कुर्वन्नयं ततः ॥ ८४ ॥ पृष्टौ तेनापि तौ मूलात्, वृत्तान्तं तं निजं निजम् । कथयामासतुः सर्वमनुभूतं यथा यथा ॥ ८५ ॥ कुमारो मलयाकेतुः, शिरो धुन्वन् जगाविति । अनुभूतमहो दुःखं, युवाभ्यां कथमीदृशम् ? ॥ ८६ ॥ इत्थं परस्परं प्रीतिवार्त्तारसवशंवदाः । ते सर्वेऽपि क्षुधां तृष्णां, निद्रां चान्वभवन्न हि ॥ ८७ ॥ राज्ञा मलयकेतुः स, कुमारः सत्कृतो भृशम् । स्नानभोजनवस्त्राद्यैः, स्वस्थस्नेहेन तस्थिवान्

॥ ८८ ॥ कतिचिद्दिनपर्यन्ते, तेनोक्तं भूपतिं प्रति । मां प्रेषय नराधीशाधुना यामि निजं पुरम् ॥ ८९ ॥ जामातृसुतयोर्येन, चिन्तयन्तावमङ्गलम् । दुःखेन गमयन्तौ च, कालं मे पितरौ स्थितौ ॥ २९० ॥ गत्वाऽऽदेशेन युस्माकमहं वर्द्धापयामि तौ । विदधामि तथा प्रत्युज्जीवितानन्दमानसौ ॥ ९१ ॥ अन्यथा दुःखमग्नौ तौ, नूनमेतौ मरिष्यतः । प्राणेभ्योऽपि तयोर्यस्मादेषाऽभीष्टा सुताऽधिकम् ॥ ९२ ॥ श्रुत्वेति भूपतिः स्माह, प्रहेतुमसहा वयम् । यद्येवं वत्स ! तद्गच्छ, वदामो नैव किञ्चन ॥ ९३ ॥ अग्रेऽप्यस्त्यावयोः प्रीतिवल्ली सम्बन्धवारिणा । सिक्ताऽनेनाधुना वाच्यं-पितुरित्यात्मनस्त्वया ॥ ९४ ॥ महाबलं स्वसारं च, पप्रच्छ मलयस्ततः । गमनायासुखं पित्रोराविष्कुर्वंस्तयोः पुरः ॥ ९५ ॥ महाबलो जगादेति, वाच्यं श्वशुरयोर्मम । कुमार ! सारसौजन्य !, नमस्कारपुरस्सरम् ॥ ९६ ॥ अनाख्याय स्ववृत्तान्तं, कन्यामादाय गच्छता । महाबलेन चौरेण, यद्दुःखं युवयोः कृतम् ॥ ९७ ॥ युवाभ्यां मम निःशेषमागः क्षन्तव्यमेव तत् । उत्पाट्याहं समानीतस्ततः परवशो यतः ॥ ९८ ॥ युग्मम् । ऊचे मलयसुन्दर्या, भ्रातरागमनादिकम् । त्वयाऽम्बातातपादानां, विज्ञप्यं सर्वमप्यदः ॥ ९९ ॥ चिन्ता कापि न कर्त्तव्या, सुखेन महताऽस्म्यहम् । इति च भ्रातराख्येयं, गन्तव्यं पथि सुष्ठु च ॥ ३०० ॥ कुमारो

मलयः सोऽपि, सर्वमभ्युपगत्य तत्। विमुञ्चन्मोचयंश्चापि, बाष्पाम्भः प्रस्थितः पथि ॥ १ ॥ पुरीं चन्द्रावतीं प्राप,
निर्विलम्बप्रयाणकैः। सुताजामातृलाभोक्त्या, स पित्रोरकरोन्मुदम् ॥ २ ॥ तयोर्वृत्तान्तमाकर्ण्य, कुमारात्स नरे-
श्वरः। नित्यसानन्दितस्तस्थौ, महादेव्याः समं ततः ॥ ३ ॥ महाबलस्य तत्राथ, भुञ्जानस्य महासुखम्। सार्द्धं
मलयसुन्दर्या, ययौ कालः कियानपि ॥ ४ ॥ अथान्यदा तयोर्गेहगवाक्षाङ्कोपविष्टयोः। दम्पत्योश्छिन्ननासा सा,
नारी द्वारमुपागता ॥ ५ ॥ महाबलेन तां दृष्ट्वा, जगदे वल्लभां प्रति। सैषा यस्याः स्वरं श्रुत्वाऽनुयातोऽहं प्रिये! तदा
॥ ६ ॥ ततो मलयसुन्दर्या, स्थिरदृष्ट्या निरीक्ष्य ताम्। उपलक्ष्याङ्गचिह्नैश्च, प्रोचे विस्मितचेतसा ॥ ७ ॥ नूनं
कनकवत्येषा, सैवावाभ्यां तदा प्रिय!। मञ्जूषान्तःस्थिता नद्याः, प्रवाहे या प्रवाहिता ॥ ८ ॥ गुह्यं वक्ष्यति
किञ्चिन्नो, निर्लज्जैषोपलक्ष्य माम्। यद्यन्तरस्थाः शृणोम्यत्र, तदहं युष्मदाज्ञया ॥ ९ ॥ प्रियादेशेन तस्थुष्यां, तस्यां
काण्डपटान्तरे। प्रविष्टा तत्र सा नारी, प्रतीहारनिवेदिता ॥ ३१० ॥ पृष्टा साऽथ कुमारेण, प्रतिपत्तिपुरस्सरम्। सम्यग्
सर्वं समाख्याहि, शुभे! त्वं चरितं निजम् ॥ ११ ॥ सा जगाद कुमारेन्द्र!, चन्द्रावत्याः पुरः प्रभोः। भार्या वीर-
धवलस्य, नाम्ना कनकवत्यहम् ॥ १२ ॥ चुकोप भूपतिर्मह्यमेवमेवान्यदा ततः। त्यक्त्वा सर्वमहं कोपात्, निर्गता

राजवेश्मतः ॥ १३ ॥ मिलितो मे पुमानेको, दक्षो वैदेशिको युवा। तेन सङ्केतिता गोलानद्यां देवीगृहे त्वहम् ॥ १४ ॥ तस्याहं मिलिता तत्र, गत्वा रात्रौ कथञ्चन। धूर्त्तेनोक्तं ततस्तेन, चौराः सन्त्यत्र मा वद ॥ १५ ॥ गृहीतं तेन मत्पार्श्वात्, सर्वं वस्त्रादि भाषितम्। भद्रे! प्रविश मञ्जूषां, यावद्गच्छन्ति तस्कराः ॥ १६ ॥ प्रविष्टा तत्र भीताऽहं, तेनापि मम कञ्चुकम्। हारं चादाय शेषं तु, मञ्जूषायां प्रचिक्षिपे ॥ १७ ॥ मञ्जूषाया मुखं तेन, पापेन पिहितं द्रुतम्। सङ्केतितो द्वितीयोऽथ, कोऽपि तत्र समागतः ॥ १८ ॥ ताभ्यामुत्पाट्य मञ्जूषा, द्वाभ्यां गोलानदीरये। मुक्ता तरीतुमारब्धा, तरीव त्वरितं पुनः ॥ १९ ॥ कुमारेण ततोऽभाणि, त्वं ताभ्यां किमु सुन्दरि!। अज्ञाताभ्यां नदीवाहे, पेटान्तःस्था प्रवाहिता? ॥ ३२० ॥ अभिज्ञाऽस्ति तयोः काचित्, किञ्चिज्जानासि कारणम्?। सा प्रोवाच ममाज्ञातौ, तौ निष्कारणवैरिणौ ॥ २१ ॥ अनिमित्तमहो चक्रे, ताभ्यां तदसमञ्जसम्। इति जल्पन् शिरःकम्पं, कुमारः कृतवान्मुहुः ॥ २२ ॥ जगाद च पुरो ब्रूहि, मञ्जूषा कुत्र सा गता? । सा स्माह रजनीप्रान्ते, कुमारात्र समागता ॥ २३ ॥ धनञ्जयस्य यक्षस्यासन्नगोलानदीतटम्। प्राप्ताऽऽकृष्य बहिश्चक्रे, लोभसारेण दस्युना ॥ २४ ॥ भङ्क्त्वा तालकमुद्घाट्य, द्वारं यावद्विलोकितम्। तावद् द्रष्टा गृहीता च, तेनाहं वस्त्र-

संयुता ॥ २५ ॥ नीत्वाऽलम्बगिरौ तेन, विषमे क्वापि कन्दरे । एकत्र दर्शयाञ्चक्रे, गुप्तं मे निजमन्दिरम् ॥ २६ ॥ पुरलक्ष्मी समस्ताऽपि, नीत्वा क्षिप्ताऽस्ति तत्र या। दर्शिता साऽपि मे तेन, बहुमानपुरस्सरम् ॥२७॥ नामादि कथितं सर्वं, मिथःस्नेहेन तेन तु । तथा चैव हृतं चित्तं, यथा मे तत्र संस्थितम् ॥ २८ ॥ स्थित्वा यामयुगं सोऽत्रागतः कार्येण केनाचित् । प्रापि क्वापि नरेन्द्रेण, हताशः पश्यतोहरः ॥ २९ ॥ राज्ञा गोलातटेऽलम्बशैलमूलेऽथ तस्करः । साय-मुद्बन्धयाञ्चक्रे, तत्र न्यग्रोधपादपे ॥ ३३० ॥ मया दृष्टोऽद्रिशृङ्गाग्रस्थितया स ततो निशि। गताऽहं तत्र शोकेन, रुदती मिलिता च ते॥३१॥अतः परं च यज्जातं, तत्र यत्प्रकटं तव। इत्येष मम निःशेषो, वृत्तान्तो राजनन्दन ! ॥ ३२॥ गृहाण द्रविणं तच्च, स्थानं तद्दर्शयाम्यहम् । अथाचख्यौ तया सार्द्धं, गत्वा राज्ञेऽखिलं स तत् ॥ ३३ ॥ पुरस्कृत्याथ तां भूपो, गत्वा तत्र च सत्वरम् । यस्य यद्वस्तु तत्राभूत्, तस्मै सर्वं तदाऽर्पयत्॥३४॥प्रभूतं शेषमादाय, द्रविणं स्वपुरं ययौ । पुष्टकोशोऽभवत्तेन, द्रव्येण पुरुषेण च ॥ ३५ ॥ राजा ( ज ) दत्तोचितद्रव्या, नारी सा छिन्ननासिका । कुमारेण समं यावत्, कुमारावासमाययौ ॥ ३६ ॥ तत्र तावदपश्यत्सा, बालां मलयसुन्दरीम् । लक्ष्मीपुञ्जेन हारेण, भूषितां हृद्य-तर्कितम् ॥३७॥ चमत्कृताऽथ सा दध्यौ, दुष्टैषा जीविता कथम् । कथं च न मृता कूपात्, परिणीताऽमुना कथम् ?

॥ ३८ ॥ प्रष्टुकामाऽपि नापृच्छत्, किञ्चित्तत्रेति सा वशा। यदेषा मे चरित्रं (वै), सर्वं प्रकटयिष्यति ॥ ३९ ॥
लक्ष्मीपुञ्जोऽपि हारोऽयमानीयास्यै समर्पितः। पापायै मम वैरिण्यां, काभ्यामपि हृतो द्रुतम्॥ ३४० ॥ न ज्ञायतेऽथवैता
भ्यामेवैष मम पार्श्वतः। हारः केनाप्युपायेन, तदाऽग्राहि नदीतटे ॥ ४१ ॥ तन्नूनं वैरिणावेतौ, मम दुष्टावुभा-
वपि। ध्यायन्तीमिति तामेवमूचे मलयसुन्दरी ॥ ४२ ॥ अनभ्रेयं कुतो? वृष्टिस्त्वमम्बैकाकिनी कथम्?।
दुष्टावस्था कथं युष्मन्नासाया इयमीदृशी ॥ ४३ ॥ इतश्चोक्तं कुमारेण, प्रष्टव्यं न प्रिये! त्वया। ज्ञात-
मस्ति मया सर्वं, कथयिष्याम्यहं तव ॥ ४४ ॥ अलं कालविलम्बेन, त्वया हीत्यनुगम्यताम्। कुमारः कनक-
वतीगृहं शून्यमदीदृशत् ॥ ४५ ॥ चित्ते दुष्टा मुखे मिष्टा, स्थिता सा तत्र नित्यशः। पार्श्वे मलयसुन्दर्या, आजगामा-
पनासिका ॥ ४६ ॥ तथाऽजल्पत्तथा तस्थौ, तथा वार्ताश्चकार सा। यथा प्रत्यतिधूर्ता तां, विश्वस्ता भूपभूरभूत् ॥४७॥
एवं मलयसुन्दर्याः, पश्यन्ती छिद्रसन्ततिम्। कालं निर्गमयामास, सा निष्कारणवैरिणी ॥ ४८ ॥ अथो मलयसु-
न्दर्या, भुञ्जानाया निरन्तरम्। सुखं वैषयिकं तत्राभवद्गर्भस्य सम्भवः ॥ ४९ ॥ ततस्तस्याः सुखेनैव, कालो गच्छति
लीलया। पूर्यमाणासु सर्वासु, वाञ्छासु नृपसूनुना ॥ ३५० ॥ मनोरथेषु सर्वेषु, वर्द्धमानेषु नित्यशः। तस्या ला-

वण्यपूर्णाया, वेलामासः समागमत् ॥ ५१ ॥ युग्मम् । अत्रान्तरे नरेन्द्रेण, कुमारः स महाबलः । आदिष्टो वत्स ! गच्छ त्वमुद्भटैः सुभटैर्वृतः ॥ ५२ ॥ उपद्रवन्तंमात्मीयदेशं दुर्गस्थितं तदा । पल्लीशं क्रूरनामानं, निगृहाणोग्रविग्रहम् ॥ ५३ ॥ प्रमाणं तात ! युष्माकमादेश इति संसदि । जल्पित्वाऽऽगत्य चाचख्यौ, कुमारस्तत्प्रियां प्रति ॥५४॥ उत्सुका सह यानाय, बोधयित्वा कथञ्चन । सा प्रिया स्थापिता तत्र, कुमारेण महौजसा ॥ ५५ ॥ उक्तञ्च साम्प्रतं कान्ते !, न युक्तः स्थानचालकः । तवासन्नप्रसूतेस्तत्त्वं तिष्ठात्रैव सुस्थिता ॥ ५६ ॥ तां गदित्वेति बहुधा, तया ज्ञाताऽस्ति या पुरा । तां भालचित्रगुटिकामर्प्पयित्वेति सोऽब्रवीत् ॥ ५७ ॥ तातादेशमहं कृत्वा, दिनै स्तोकतरैस्तव । अक्षमो विरहं सोढुमागमिष्यामि वल्लभे ! ॥ ५८ ॥ तत्प्रसन्ना प्रिये ! भूत्वाऽनुज्ञां देहि प्रयाम्यहम् । अन्यथा पितुरादेशमकुर्वन्नास्मि भूपभूः ॥ ५९ ॥ अथ साऽश्रूणि मुञ्चन्ती, निःश्वसत्यतिसन्दवाक् । अनुमेने तमेतव्यं, पुनराश्वितिवादिनी ॥ ३६० ॥ रुद्धकण्ठः कुमारोऽपि, पश्चाद्ग्रीवं पुनः पुनः । पश्यंस्तां जनकादेशात्, गलिताश्रु विनिर्ययौ ॥ ६१ ॥ तत्कालमिलिताशेषसारसैन्यसमन्वितः । क्रूरं साधयितुं भिल्लाधीशं राजसुतो ययौ ॥ ६२ ॥ सा कनकवती पश्चात्, पश्यन्ती छलमन्वहम् । दध्यावेकाकिनी जाताऽधुनैषा सुकृतैर्मम ॥ ६३ ॥ किञ्चित्सङ्क-

ल्प्य कूटं सा, सुन्दर्या गृहमागता । समुद्विग्नामपश्यत्तां, न्यस्तास्यां पाणिपङ्कजे ॥ ६४ ॥ तथा वार्त्ताश्चकारैषा, कथाश्चाकथयत्तथा। सुखेनागमयद् घस्रं, यथा मलयसुन्दरी ॥६५॥ तयाऽभाण्यथ हेअम्ब !, त्वं तिष्ठात्रैव निश्यपि । सुखेनैव निशा येन, याति मे वचनैस्तव ॥ ६६ ॥ शर्करा पतिता दुग्धे, च्युत्त्वा हस्ततलादहो । चिन्तयन्तीति दुष्टा सा, वचस्तस्या अमन्यत ॥ ६७ ॥ यथा दिनं तथा तस्या, गता रात्रिरपि प्रगे । तया कनकवत्योक्तमेवं कपटपूर्णया ॥६८॥ उपद्रोतुममुत्र त्वां, भ्रमन्ती राक्षसी निशि । दृष्टैका प्रतिजघ्ने च, जाग्रत्या तनये ! मया ॥ ६९ ॥ ततो यदि त्वमाख्यासि, भूत्वाऽहं तादृशी ततः । तथा तां विदधाम्यत्र, पुनर्नायाति सा तथा ॥ ३७० ॥ न श्रुतं किं त्वया संति, रक्षसामपि भेषजम् । ततो मलयसुन्दर्या, मुग्धयाऽमानि तत्तथा ॥ ७१ ॥ तस्मिंश्च समये तत्र, नगरे मार्युपद्रवम् । ज्ञात्वा दुष्टा गता छिन्ननासा सा राजसन्निधौ ॥ ७२ ॥ याचित्वैकान्तमाभाषि, तया भूपश्छलज्ञया । तवाख्यामि हितं स्वामिन् !, यदि त्वं मे प्रसीदसि ॥७३॥ दत्त्वाऽभयं ततो राज्ञा, सादरं भणिता वद । साऽवोचन्नृप ! युष्माकं, वधूरेषा हि राक्षसी ॥ ७४ ॥ प्रत्ययश्चेन्न मे वाक्ये, युष्माभिर्दूरसंस्थितैः । द्रष्टव्येयं ततः पापा, निजावासस्थिता निशि ॥ ७५ ॥ देवैषा निशि राक्षस्या, रूपेण स्वगृहाङ्गणे । परिभ्रमाति वल्गन्ती, पश्यन्ती सर्वतो दिशः ॥७६॥ मन्दं मन्दं च फेत्का-

रान्, मुञ्चत्येषा भयङ्करान् । तेनोच्छलति लोकानां, मारिरेषा पुरे तव ॥७७॥ ध्रियमाणा तदा रात्रौ, किन्तूपद्रोष्यति त्व-
कम् । प्रभाते देव! तेनैषा, निग्राह्या सुभटैस्त्वया ॥ ७८ ॥ पुराप्यासीन्नृपो मारिहेतुं ज्ञातुं समुत्सुकः । अचिन्तित-
मिदं श्रुत्वा, तदा चित्ते चमत्कृतः ॥ ७९ ॥ अहो! अभद्रमेतत्किं, ममैतद् विमलं कुलम् । सर्वतो विस्फु-
रल्लोके, सकलङ्कं करिष्यति ॥ ३८० ॥ रजन्यां ज्ञास्यते नूनं, सर्वमेव यथास्थितम् । कथितस्य विसंवादो, यद्यस्या
न भविष्यति ॥ ८१ ॥ ध्यात्वेति भूपतिः स्माह, चिन्ताचान्तमुखच्छविः । कथनीयं न कस्यापि, गोप्यमेतत्त्वया
शुभे ! ॥ ८२ ॥ सोवाचाहं किमज्ञाना, ज्ञाता युष्माभिरीदृशी ! । भवेयं यदि नैकान्ते, न ब्रूयां तत्तवैव हि ॥८३॥
ततः सत्कृत्य सा राज्ञा, विसृष्टाऽगान्निजं गृहम् । वेषादिकं च राक्षस्यास्ततः सर्वमसज्जयत् ॥ ८४ ॥ रजन्यां
सा समागत्याजल्पत् मलयसुन्दरीम् । स्थातव्यं तावदत्रैव, त्वया पुत्रि! गृहान्तरे ॥ ८५ ॥ यावद् द्वारस्थिता दुष्टां,
हत्वा तां राक्षसीमहम् । आगच्छामि समीपं तेऽन्यथाऽनिष्टं भविष्यति ॥ ८६ ॥ शिक्षां दत्त्वेति सा गत्वा, बाह्ये वस्त्र-
विवर्जिता । चकार राक्षसीरूपं, वर्णकैश्चित्रिताङ्गका ॥ ८७ ॥ दधावुल्मुकमास्येन, करालक्षुरिकाकरा । राज्ञो
यथा यथाऽऽख्यातं, चकार च तथा तथा ॥ ८८ ॥ अत्रान्तरे समीपस्थाऽन्यवेश्मोपरिवर्त्तिना । दृष्टा छन्नेन पापिष्ठा,

तथारूपा नृपेण सा ॥ ८९ ॥ सत्यं तत्किल सञ्जातं, यत्तया कथितं मम। तदङ्को मे कुले मा भूत्, मृत मा स्म जनोऽप्ययम् ॥९९०॥ करिष्यति ममैषा किं, दुष्टा सुस्थितचेतसः। निर्जनायां त्रियामायां, घातनीयाऽधुनैव हि ॥९१॥ इति प्रजल्पता तेन, तीव्रकोपेन भूभुजा। अपह्वरं समादिष्टा, निजा विश्वासपूरुषाः ॥ ९२ ॥ अहो दुष्टामिमां गत्वा, यूयं धत्त दृढग्रहाः। रथं चारोप्य वेगेन, निर्वासयत पत्तनात् ॥ ९३ ॥ रौद्राख्यामटवीं नीत्वा, रात्रिमध्ये तथा हत। प्रच्छन्नं न यथा वार्त्तामपि जानाति कश्चन ॥९४॥ आगच्छतोऽथ दृष्ट्वा तान्, खड्गहस्तान् महाभटान्। प्रविवेशाशु भीता सा, मध्ये राजसुतागृहम् ॥९५॥ कम्पमाना भयेनोचे; हे वत्से! केऽप्यमी नराः। आगच्छन्ति द्रुतं हन्तुं, मां राज्ञा प्रेषिताः किल ॥ ९६ ॥ राजादेशं विना येन, स्थिताऽहं तव सन्निधौ। मृगाक्षि! कुपितस्तेन, मारयिष्यति मां नृपः ॥ ९७ ॥ तत्त्वं क्वापि क्षिपैतां मां, यत्र पश्यन्ति नागताः। ततस्तादृशरूपा सा, विवस्त्रा छिन्न-नासिका ॥ ९८ ॥ मञ्जूषायां तया क्षिप्ता, मङ्क्षु दत्तं च तालकम्। अथ ते कोपदुष्प्रेक्षाः, प्राविशन् राजपूरुषाः ॥ ९९ ॥ युग्मम्। दृष्ट्वा मलयसुन्दर्या, रूपं स्वाभाविकं पुनः। दध्युस्ते राक्षसीरूपं, त्यक्तं भीत्याऽनया खलु ॥४००॥ आः पापेऽद्यापि लोकांस्त्वं, कियत्कालं हनिष्यसि?। इतिवादिभिरात्ता तैर्दृढं मलयसुन्दरी ॥१॥ बहिः कृष्ट्वा समारोप्य,

कार्यमिदं दोषेण गुर्वपि ॥ १५ ॥ निर्नासा सा वशा भूरिकूटानां मन्दिरं प्रभो ! । जानाम्यहं पुराऽप्यस्या, माहात्म्यं मूलतोऽपि च ॥ १६ ॥ इदानीमावयोः क्वास्ति, ? सा निष्कारणवैरिणी । आनीय तां दर्शयध्वं, येन पृच्छाम्यहं स्वयम् ॥ १७ ॥ नृपः स्माह कुमाराधिक्षेपवाक्यैरधोमुखः । नालं विलोक्यमानाऽपि, लब्धा नष्टा तदैव सा ॥ १८ ॥ निराशोऽथ कुमारोऽवक्, छलं लब्ध्वा हहा प्रिये ? । प्रनष्टा क्वापि सा कूटं, वितत्यैतत्तवोपरि ॥ १९ ॥ नूनं तात ! त्वया तस्या, वचनेन मुधा निजे । कुले लाञ्छनमानीतं, वंशच्छेदश्च निर्मितः ॥ ४२० ॥ इत्युक्त्वा बहुधा कान्तावियोगविधुरस्ततः । हृल्लेखकलितः कामं, कुमारोऽगान्निजं गृहम् ॥ २१ ॥ पृष्ठिलग्नो नरेन्द्रोऽपि, तत्रागात्पुत्रवत्सलः । स्वयंदत्तानि सर्वत्र, तालकान्युदघाटयत् ॥ २२ ॥ ऊचे च राक्षसीरूपा, चेष्टमानेह सा मया । बहुधा ते प्रिया दृष्टा, स्वयं मलयसुन्दरी ॥ २३ ॥ दोषस्ततो न मे कश्चित्, कुर्वतो दण्डमीदृशम् । येनेष्टापि निजा वत्स !, विनष्टा छिद्यते भुजा ॥ २४ ॥ तन्मा ताम्य कुमार ! त्वं, स्वस्थं कृत्वा निजं मनः । पश्यासीद् गेहसारं स्वं, किं किमस्ति च साम्प्रतम् ॥ २५ ॥ असम्भाव्यमहो ! यन्मे, वल्लभा साऽपि राक्षसी । उपद्रवति लोकांश्च, सर्वान् मलयसुन्दरी ॥ २६ ॥ ज्ञास्यते किन्तु सर्वं चेज्जीविष्यति कथञ्चन । इति ध्यायन् कुमारः स लग्नः सर्वमपीक्षितुम् ॥२७ ॥ युग्मम् ।

विद्यते क्वापि, किं वा नास्त्येव सर्वथा ॥ ४४० ॥ चिन्तयित्वा ततोऽवादीदादेशीति विचक्षणः । जीवन्त्यस्ति कुमारस्य, वर्षान्ते सा मिलिष्यति ॥४१॥ जीवन्ती विद्यते सेति, श्रुत्वा वाक्यं सुधोपमम् । उज्जीवित इवाजल्पत्, कुमारः स्फारितेक्षणः ॥४२॥ अहो ! नैमित्तिक ! ब्रूहि, विलम्बस्वापि मा क्षणम् । क्व सा तिष्ठति जीवन्ती, सुन्दरी मम वल्लभा ॥४३॥ ज्ञानी स्माह कुमारैषा, स्थिता न ज्ञायते क्वचित् । शून्ये वसति वा स्थाने, सुखिता दुःखिताऽथवा ॥४४॥ ततो यैः सुभटैस्त्यक्ताऽटव्यां सा सुन्दरी तदा । नृपेणाहूय ते पृष्टा, वितीर्याभयमञ्जसा ॥ ४५ ॥ हंहो ब्रूत नराः ! सम्यक्, तदाऽरण्ये ममाज्ञया । नीत्वा मलयसुन्दर्या, वत्सायाः किमु किं कृतम् ? ॥४६॥ ऊचुस्ते देव ! सा यावन्नीत्वा तत्र व्यमुच्यत । तावद्दीनमुखी भीत्या, कम्पमानाऽरुदद्भृशम् ॥ ४७ ॥ दध्येऽस्माभिस्ततश्चिह्नैरेभिरेषा न राक्षसी । भ्रान्तः केनापि दुष्टेन, नूनं व्यामोहितो नृपः ॥ ४८ ॥ स्त्रीहत्या भ्रूणहत्या च, महापापमिदं ततः । न हन्तव्याऽत्र मुक्तेयं, स्वयं शून्ये मरिष्यति ॥ ४९ ॥ ध्यात्वेति रुदतीं मुक्त्वा, जीवन्तीमेव तत्र ताम् । अत्रागत्य तवास्माभिर्भीत्या मिथ्या प्रजल्पितम् ॥ ४५० ॥ नृपोऽवोचदहो ! यावद्दयाऽमीषां न साऽपि मे । बुद्धिरेषामभूद्या च, हताशस्य न साऽपि मे ॥ ५१ ॥ इत्यात्मानं नृपो निन्दन्, प्रशंसंश्च भृशं नरान् । प्रसादैः प्रीणयामास, तांस्तं च गणकोत्तमम् ॥५२॥

कुमारः स्माह भो ज्ञानिन्!, मिलितं यत्त्वयोदितम्। जीवन्ती सा यतोऽसीभिर्मुक्ता बाला हता नहि ॥५३॥ ततो विलोक्यते तात!, तत्रान्यत्रापि साऽधुना। चन्द्रावत्यां नगर्यां च, प्रेष्यते कोऽपि पूरुषः ॥५४॥ श्रीवीरधवलस्यापि, वृत्तान्तोऽयं निवेद्यते। 'अस्माकं तत्र सा पुण्यैर्गता स्याच्चेत्कथञ्चन ॥ ५५ ॥ अथायाता न तत्सोऽपि, गवेषयति भूपतिः। कुमारोक्तं ततः सर्वं, राज्ञा तत्समनुष्ठितम् ॥ ५६ ॥ प्रतिबोध्य कुमारः स, भोजितो भूभुजा ततः। स्वयं भुक्तं स्थितं चापि, चिन्तामग्नेन चेतसा ॥ ५७ ॥ कालेन कियता तेऽथ, सम्प्राप्ताः प्रेषिता नराः। बालायाः क्वापि तस्यास्तु, शुद्धिर्लब्धा न केनचित् ॥ ५८ ॥ कुमारोऽथ निराशः सन्, दुःखमग्नो व्यचिन्तयत्। अपुण्यानि ममाहो! यत्, वियोगः प्रियया सह ॥५९॥ हाहा शून्ये महाऽरण्ये, कराभ्यां हृदयं स्वयम्। आहत्य हृदयस्फोटं, भविष्यसि मृता प्रिये! ॥४६०॥ अथवेतस्ततो यान्ती, केनाप्याप्ता भविष्यसि। अथवा क्रूरजीवैस्त्वं, भक्षिताऽऽशु भविष्यसि ॥ ६१ ॥ त्वं मेऽपि दयिता भूत्वा, पतिताऽसीदृगापदि। यूथभ्रष्टा कुरङ्गीव, भ्रमस्येकाकिनी वने ॥ ६२ ॥ उत्सुकाऽपि प्रिये! स्वच्छे,! सहागमनहेतवे। मया दैवहतेन त्वं, पश्चान्मुक्ता कथं तदा? ॥ ६३ ॥ अनुभूय सुखं तादृगिदानीं दुःखसागरे। निर्मग्ना दयिते! गाढं, भविष्यसि कथं कथम्? ॥६४॥ इत्यादि बहुधा चित्ते, स्मारं स्मारं नरेन्द्रसूः। हृदीव शल्यितो

भल्या, रतिं नाप कथंचन ॥ ६५ ॥ ततो नैमित्तिकाख्यातं, स्मरन् खड्गयुतो निशि । कुमारो निरगाच्छन्नः, प्रियां सर्वत्र वीक्षितुम् ॥ ६६ ॥ प्रभाते पितरौ पुत्रमपश्यन्तौ च कुत्रचित् । ऊचतुर्न क्षमः स्थातुं, वत्सोऽगाद्वीक्षितुं प्रियाम् ॥ ६७ ॥ आपदं लप्स्यते क्वापि, नानादुःखं सहिष्यते । पान्थवत्पादचारी स, भूशायी च भविष्यति ॥ ६८ ॥ लब्ध्वा तां सुवधूं सुतं पुनरिहायातं कदा लोचनैर्द्रक्ष्यावः ? पितराविति प्रतिदिनं चिन्तातुरौ तस्थतुः । एकाकी नृपनन्दनस्तु दयितां पश्यन् प्रणश्यत्तृषाक्षुन्निद्रासुखसङ्गमः क्षितितलं बभ्राम हृल्लेखवान् ॥ ६९ ॥

इत्यागमिकश्रीजयतिलकसूरिविरचिते ज्ञानरत्नोपाख्याने मलयसुन्दरी-
चरिते श्वशुरकुलसमागमो नाम तृतीयः प्रस्तावः ।

---

इतश्च प्रोज्झिता रात्रौ, बाला मलयसुन्दरी । अरण्ये क्रूरसत्त्वानां, शब्दान् श्रुत्वा व्यचिन्तयत् ॥ १ ॥ शून्येऽरण्ये तमस्विन्यामुज्झित्वा मां गताः खलु । निर्दया रथमादाय, हा हा ते राजपूरुषाः ॥ २ ॥ अपराधमनाख्याय, कृतो दण्डो यदीदृशः । राज्ञा मे तन्महादुःखमेकमेव दुनोति माम् ॥३॥ अहो ! चित्रमिदं केनाप्येष यद्विप्रतारितः । श्वशुरः सूरपालो मे, बुद्धिमानपि सर्वथा॥४॥ हा सूरपालभूपाल !, निर्विचारः किमीदृशः ? । पश्चात्तापेन पश्चात्त्वं, भवि-

प्यासि कथं पुनः ? ॥५॥ सुखहेतोर्विमुक्तायास्तदा प्रियतम ! त्वया । गच्छता मम जातेयमवस्था साम्प्रतं पुनः ॥६॥ हा वल्लभातिदुर्लम्भ !, ज्ञात्वोदन्तमिमं मम। विरहानलसन्तप्तो, भविष्यसि कथं कथम् ? ॥७॥ हा मातस्तात ! हा भ्रातर्मिलिष्यामि कथं हि वः । एतावन्त्यपपुण्याया, मम पुण्यानि सन्ति न ॥८॥ अभविष्यन्न चेज्जन्म, मृत्युर्वा जन्मतोऽपि मे। अभविष्यं तदा नाहमीदृग्दुःखस्य भाजनम् ॥ ९ ॥ बहुना शोचितेनापि, परित्राणं कदाऽपि न । कारणं विधिरेवेति, सा तं श्लोकं ततोऽस्मरत् ॥१०॥ इत्यादि बहुधा तस्या, विलपन्त्या महाव्यथा । दुःखार्त्तायाः समुत्पेदे, जठरे गर्भपूरिते ॥११॥वेदनाविधुरा साऽथ, सुषुवे नन्दनं वरम् । पूर्वेव तरणेर्बिम्बं, तेजःपुञ्जविराजितम् ॥१२॥ आनन्दिताङ्कमारोप्य, पश्यन्ती तं निजं सुतम् । स्वयमेव वितन्वाना, सूतिकर्मेत्युवाच च ॥ १३ ॥ हा वत्स ! स्वच्छ ! कुर्वेऽहं, तवारण्येऽत्र कीदृशीम् । मनोरथशतातस्य, वर्द्धापनपरम्पराम् ॥ १४ ॥ खिद्यमानेति बहुधा, सहमाना च यातनाम् । कम्पमाना भयेनोच्चैर्गमयामास तां निशाम् ॥ १५ ॥ प्रभाते सा समीपस्थां, नदीं गत्वाऽभवत् शुचिः । स्मृत्वा देवान् गुरूंश्चापि, फलान्यादद् बुभुक्षिता ॥ १६ ॥ निकुञ्जे क्वापि सा यावत्, पालयन्ती स्तनन्धयम् । युगपच्छोकहर्षाभ्यां, तस्थौ सङ्कीर्णमानसा ॥ १७ ॥ तत्र तावद्वहन् मार्गे, परिवारेण भूयसा । बलसाराभिधस्तस्थौ, सार्थवाहो नदीतटे ॥ १८ ॥

इतस्ततो जनाश्चेलुर्घासैधोदकहेतवे । निर्ययौ सार्थवाहोऽपि, सार्थतः कायचिन्तया ॥ १९ ॥ यत्र पुत्रद्वितीयाऽभूत्कुञ्जे मलयसुन्दरी । यावत्तन्निकषा सोऽगादरोदीत्तावदर्भकः ॥ २० ॥ श्रुत्वा डिम्भस्वरं सार्थवाहो विस्मितमानसः । निकुञ्जं प्रविशन्बालामपश्यत् पुत्रसंयुताम् ॥ २१ ॥ अपूर्वा काऽपि रूपश्रीर्लावण्यमसमं तथा । एतस्याश्चिन्तयन्नेवमपृच्छत्सार्थनायकः ॥२२॥ काऽसि त्वं किमरण्येऽत्र, सुन्दर्येकाकिनी किमु ? । आकारोऽपि तवाख्याति, प्रसूतिं प्रवरे कुले ॥२३॥ अपहारेण रोषेणाथवाऽभीष्टवियोगतः । वने बभूव वासस्ते, पुत्रस्य प्रसवोऽत्र च ॥२४॥ बलसाराभिधानोऽहं, व्यवहारी महर्द्धिकः । सागरतिलके द्रङ्गे, वसाम्यन्यत्र यामि च ॥२५॥ भव्यं जातं मया सार्द्धं, यत्तेऽभूदेष सङ्गमः । ममास्त्यत्र पटावासस्तत्रागत्य सुखं भज ॥२६॥ तयाऽथ चिन्तितं चित्ते, शीलं मे खण्डयिष्यति । धनाढ्योऽयं युवा ह्यस्तद्ददामि मृषोत्तरम् ॥२७॥ ध्यात्वेत्युक्तं तया श्रीमन्नहं मातङ्गबालिका । पितृभ्यां कलहे रोषात्, निर्गत्यात्र समागता ॥२८॥ तत्त्वं याहि निजावासमागमिष्याम्यहं न तु । निजपित्रोर्मिलिष्यामि, गत्वा दुःखेन तस्थुषोः ॥ २९ ॥ आकारचेष्टितैरेभिर्नैषा मातङ्गबालिका । कारणेन तु केनापि, करोति कपटोत्तरम् ॥ ३० ॥ ध्यात्वेति बलसारः स, जगाद चपलेक्षणे ! । चाण्डालत्वमिदं नैव, प्रकाश्यं क्वापि ते मया ॥ ३१ ॥ तदागच्छ ममावासे, तिष्ठ त्वं निजवाञ्छया । करिष्यामि

तदेवाहं, यत्त्वं वक्ष्यसि भामिनि ! । ॥ ३२ ॥ इति जल्पन्नसौ लुब्धस्तदङ्कादाशु तं सुतम् । गृहीत्वा चलितो गेहान्निधानमिव तस्करः ॥ ३३ ॥ खण्डयिष्यति मे शीलं, पापोऽयमिति चिन्तया । जाता कार्यविमूढा सा, पतिता सङ्कटे भृशम् ॥ ३४ ॥ पुत्रस्नेहवशेनैषा, लग्ना तस्याथ पृष्ठतः । जीवे गच्छति किं पश्चात्, चेतना क्वापि तिष्ठति ? ॥३५॥ प्रहृष्टः सार्थवाहस्तां, भाषमाणो मृदूक्तिभिः । पुत्रं सङ्गोप्य वस्त्रेण, प्राविशन्निजमन्दिरम् ॥ ३६ ॥ गुप्तस्थाने निवेश्याथ, खिद्यमानां नृपाङ्गजाम् । किञ्चिदाश्वासयामास, पुत्ररत्नसमर्पणात् ॥ ३७ ॥ यत्किञ्चन वदत्येषा, कर्त्तव्यं तत्त्वया शुभे ! । शिक्षयित्वेति ! दास्येका, नियुक्ता तेन तां प्रति ॥३८॥ वरभोजनवस्त्रालङ्काराद्यं सर्वदा ददौ । बभाषे न वचः किंचित्तस्याः सोऽप्रीतिकारणम् ॥ ३९ ॥ किञ्चित्स्वस्था ततस्तेन, पृष्टा सा तव नाम किम् । तया मन्दं बभाषेऽहं, नाम्ना मलयसुन्दरी ॥ ४० ॥ बलसारस्ततो दध्यौ, स्वं सम्यग् मा वदत्वियम् । नाम्नैव ज्ञायते काऽपि, विशिष्टकुलसम्भवा ॥ ४१ ॥ ततः स्थानादयं प्राप, निर्विलम्बप्रयाणकैः । सागरतिलकं नाम, वेलाकूले निजं पुरम् ॥४२॥ गुप्तगेहे ततः क्वापि, मुक्ता सा ससुता तथा । न जानाति यथा कोऽपि, तामेकां दासिकां विना॥४३॥ अथ तेनान्यदाऽभाणि, सैवं मलयसुन्दरी । प्रतिपद्यस्व मामद्य, वल्लभत्वेन सुन्दरि ! ॥ ४४ ॥ समास्याः सर्वलक्ष्म्या-

स्त्वं, स्वामिनी भव मानिनि ! । आजन्माहं तवाज्ञायाः, कारकः सपरिच्छदः ॥ ४५ ॥ ममापुत्रस्य पुत्रोऽयं, भवतात्तव पुत्रकः । प्रत्यहं प्रार्थयामास, मदनान्धः स तामिति ॥ ४६ ॥ ऊचे मलयसुन्दर्या, महापापमिदं तव । न युज्यते कुलीनस्य, विरुद्धं जन्मनोर्द्वयोः ॥ ४७ ॥ अपि नश्यतु सर्वस्वं, भवत्वङ्गं च खण्डशः । कलङ्कयामि शीलं स्वं, न तथाऽपीन्दुनिर्मलम् ॥ ४८ ॥ बहुप्रकारमित्यादि, वारितः स तथा तया । यथा विधाय तूष्णीकां, बाढं रोषारुणोऽभवत् ॥ ४९ ॥ तस्यास्तं पुत्रमादाय, दत्त्वा तालं च वेश्मनि । प्रियायाः प्रियसुन्दर्या, अर्पयामास स क्रुधा ॥ ५० ॥ ऊचे चैष प्रिये ! बालस्तेजस्वी रूपवान् मया । अशोकवनिकामध्ये, लेभे लक्षणसंयुतः ॥ ५१ ॥ भविष्यत्युज्झितो नार्या, स्वैरिण्याऽत्र कयाचन । ततोऽयं भवतात्पुत्रः, आवयोरनपत्ययोः ॥ ५२ ॥ तस्यात्मनामलेशेन, 'बल' इत्यभिधां व्यधात् । स धात्रीं स्थापयामास, स्तन्यपानाय सार्थपः ॥५३॥ शिक्षां दत्त्वाऽथ भार्याया, आपृच्छ्य स्वजनानपि । गेहाच्छन्नां गृहीत्वा तां, बलान्मलयसुन्दरीम् ॥ ५४ ॥ पूर्वसज्जीकृतं पोतं, सार्थवाहोऽधिरूढवान् । उत्क्षिप्ता नङ्गराः सर्वे, शीघ्रं कर्मकरैस्ततः ॥ ५५ ॥ युग्मम् । आज्ञया सार्थवाहस्य, ततः पोतः स पूरितः । तटं बर्बरकूलाख्यं, प्रत्यचालीज्जलाध्वना ॥ ५६ ॥ यानपात्रे पयोराशौ, पूर्णवेगेन गच्छति । दुःखिता चिन्तयामास,

उत्पन्ना कुत्र कुत्राहं, परिणीता गता क्व च । यद्यदद्यापि मे भावि, सोढव्यं तत्तदेव हि ॥ ७१ ॥ अन्यदा साऽथ सर्वाङ्गं, तैस्तक्षित्वाऽऽत्तलोहिता । मूर्च्छिता पतिता भूमौ, लिप्ता रक्तेन सर्वतः ॥ ७२ ॥ इतश्च सहसाऽऽकाशात्, उत्तीर्याऽऽमिषवाञ्छया । भारण्डपक्षिणा चञ्चुपुटेनोत्पाटितासका ॥ ७३ ॥ स यावद्गगनेऽगच्छत्, प्रापोपरि पयोनिधेः । पुरस्तादपरः पक्षी, तावद्भारण्ड आययौ ॥ ७४ ॥ मांसखण्डस्य लोभेन, युयुधे सह तेन सः । ततश्चञ्चुपुटाद् बाला, गलिता चेतनान्विता ॥ ७५ ॥ परमेष्ठिनमस्कारं, जल्पन्ती पतिताऽथ सा । नीरोपरि तरद्धस्तिमत्स्यपृष्ठे विधेर्वशात् ॥ ७६ ॥ भारण्डस्य मुखात्तावत्, पतिताऽहं न वारिणि । महामत्स्यस्य पृष्ठे तु, स्थिता दैवनियोगतः ॥ ७७ ॥ यदा तु जलधेर्नीरे, मत्स्य एष निमङ्क्ष्यते । निराधारा मरिष्यामि, तदाऽहमपि निश्चितम् ॥ ७८ ॥ इति निश्चित्य चित्ते सा, चकाराराधनां स्वयम् । परमेष्ठिनमस्कारं, पपाठोच्चैः पुनः पुनः ॥ ७९ ॥ त्रिभिर्विशेषकम् । परमेष्ठिनमस्कारं, शृण्वन् वक्रितकन्धरः । पृष्ठोपरिस्थितां तां स, वीक्षाञ्चक्रे पुनः पुनः ॥ ८० ॥ क्षणमेक झषः स्थित्वा, तरन् पश्चाज्जलोपरि । स्थिरचित्तस्तथैवैकां, दिशं गन्तुं प्रचक्रमे ॥ ८१ ॥ अहो नयति मामित्थं, सुखेनाथ क्व नेष्यति ? । प्रकृष्टहितवत्कोऽपि, मत्स्योऽयमिति विस्मिता ॥ ८२ ॥ जलकेलिनिमित्तं किं, गजारूढाब्धिनन्दना ।

समानायि झषेण किम्?। सुखेनैव किमादाय, मोचितेयं जलाद्बहिः? ॥९६॥ ततः किमेष मत्स्यस्तु, पश्चात्पश्यन् पुनः पुनः। नो जानीमो वयं किञ्चित्, सर्वमेषैव वक्ष्यति ॥ ९७ ॥ यदस्या वपुषीक्ष्यन्ते, नक्रचक्रक्षतान्यहो। तन्मन्ये भीषणं भ्रान्ता, जलराशिमियं बहुम् ॥ ९८ ॥ किं केनापि समुत्क्षिप्य, क्षिप्तेयं वैरिणाऽर्णवे। नौभङ्गे पतिता किंवा, महामीनस्य वंशके ? ॥ ९९ ॥ अथोचे सा नरेन्द्रेण, पुरस्यास्याहमीश्वरः। सागरतिलकाख्यस्य, कन्दर्पो नाम सुन्दरि! ॥१००॥ मा भैस्त्वं भव विश्वस्ता, कथयात्मानमत्र मे। का त्वं ? किं पतिता दुःखे?, मीनेनैवं धृता कथम् ? ॥ १ ॥ ततः प्रमुदिता किञ्चित्, दध्यौ मलयसुन्दरी। अहो पुण्यलता कापि, जाग्रत्यद्यापि मे ननु ॥ २ ॥ यतो यत्र पुरे येन, सार्थवाहेन मे सुतः। मुक्तोऽभूत्काप्यहं तत्रैवानीता कर्मणा किल ॥ ३ ॥ तदहं यदि पुत्रस्य, शुद्धिं लभे क्वचित्ततः। अहं पश्यामि नेत्राभ्यां, तमङ्के धारयामि च ॥ ४ ॥ एष वैरी नृपः किन्तु, तातश्वशुरयोर्मम। अतः प्रकाशनीयोऽस्य, नात्मा किञ्चिन्मया खलु ॥ ५ ॥ यद् ज्ञातपरमार्थोऽयं, नरेन्द्रो मे विशेषतः। खण्डयिष्यति कोपेन, शीलं पुत्रं च लास्यति ॥ ६ ॥ ततो निश्वस्य दीर्घं सा, बभाषे किं प्रयोजनम्?। युष्माकं मन्दभाग्याया, मम तस्या नराधिप! ॥ ७ ॥ अहं वैदिशिकी स्वीयपुण्यनाशेन दुःखिता। एवं रुलामि

किं न मग्नाऽहं ?, मत्स्येनोत्तारिता कथम् ? । पतिताऽहमिहागत्य, दुःखे श्वभ्रोपमे यतः ॥ २१ ॥ कामान्धो यदि मे शीलं, खण्डयिष्यत्ययं बलात् । मर्त्तव्यं तत्तदा नूनं, मयोपायेन केनचित् ॥ २२ ॥ वरं मृत्युर्न शीलस्य, भङ्गो येनाक्षतव्रतः । देवत्वं लभते याति, नरकं तु क्षतव्रतः ॥ २३ ॥ अथोचे सा महाराज !, नयनिष्ठा नृपाः प्रजाः । पितृवत्पालयन्त्यत्र, सर्वकालं हितार्थिनः ॥ २४ ॥ त्यक्त्वा न्यायं त्वमप्येवं, यद्यकार्यं करिष्यसि । ततो नष्टाः प्रजाः सर्वाः, शरणाद्भयमुत्थितम् ॥ २५ ॥ सतीनां शीलविध्वंसः, कृतो लोकेऽत्र निश्चितम् । अकीर्त्तिं कुरुते कामं, तीव्रदुःखान्यमुत्र तु ॥ २६ ॥ किं तु शीलं सतीनां हि, खण्ड्यमानं सुदुष्करम् । केसरिणः सटा यद्वत्, दृग्विषाहेर्मणिर्यथा ॥ २७ ॥ यत्र प्रकुपिताः सत्यस्तं कुर्युः क्षारपुञ्जकम् । बुध्यस्व त्वं ततो राजन् !, स्वकुलं मा कलङ्कय ॥ २८ ॥ विशालस्तव वंशोऽयं, कुलं च विमलं नृप ! । गुणाधारस्त्वमेकोऽसि, कुकार्यं युज्यते कथम् ? ॥ २९ ॥ स तया बोधितोऽप्येवं, महासत्या नरेश्वरः । दुष्टाभिप्रायतस्तस्मात्, कामान्धो न ह्यपासरत् ॥ १३० ॥ खण्डयिष्याम्यहं शीलमस्या नार्या बलादपि । क्षारपुञ्जं करोत्वेषा, मां चित्ते चिन्तयन्निति ॥ ३१ ॥ ततो निर्गत्य कन्दर्पो, राज्यकार्याणि निर्ममे । ध्रुवं शल्यायमानायां, तस्यामेव स्त्रियां हृदि ॥ ३२ ॥ युग्मम् । धर्मध्यानपरा सापि, नित्यं मलयसु-

तां कृष्ट्वाऽम्बरसेन च । ततश्चकार सा भालतलके तिलकं निजे ॥ ४६ ॥ ततः सा पुरुषो भूत्वा, दिव्यरूप उपाविशत् । विस्फुरद्वरलावण्यो, विश्वस्तो मत्तवारणे ॥ ४७ ॥ दृष्ट्वात्यद्भुतरूपं तमाकस्मिकमिवागतम् । विस्फारिताक्षिपत्रास्ता, व्यस्मयन्त नृपप्रियाः ॥ ४८ ॥ किं कोऽप्येष पुमान् दिव्यः ?, पातालादिह निर्गतः ? । अवतीर्णो दिवः किं वा, किं वा विद्याधरात्मजः ? ॥ ४९ ॥ इति चिन्ताकृतां तासामभवन्कामविक्रियाः । राकाचन्द्रोदये वार्द्धेरिव वेलाजलोर्मयः ॥ १५० ॥ तासां मनोऽभिरन्तुं तं, सर्वासां जातमुत्सुकम् । क्षुधितं वीक्ष्य फलितं, वृक्षं कपिकुलं यथा ॥ ५१ ॥ तासां कटाक्षविक्षेपास्तदङ्गे पतिताः समम् । प्रसरन्मञ्जरीगन्धे, रसाले भ्रमरा इव ॥ ५२ ॥ नरं तं तादृशं दृष्ट्वाऽवरोधं च विसंस्थुलम् । गत्वा प्राहरिकाः सर्वे, विस्मिता भूपतेर्जगुः ॥ ५३ ॥ आगतोऽथ नृपोऽपश्यत्, नरं तं विस्मयावहम् । धीरं सौम्यं सुखासीनं, प्रत्यक्षमिव मन्मथम् ॥ ५४ ॥ कोऽयं कथं प्रविष्टोऽत्र, बहुधेति विकल्पयन् । यावत्तां तत्र सोऽपश्यत, तावन्नैक्षिष्ट सुन्दरीम् ॥ ५५ ॥ अत्रानीयाद्य मुक्ता या, क्व सा मलयसुन्दरी ? । उत्पाट्य भृकुटीं तेन, पृष्टाः प्राहरिका इति ॥ ५६ ॥ इदानीमेव सा देव!, समासीनात्र खल्वभूत् । न गता च बहिः क्वापि, येन द्वारे स्थिता वयम् ॥ ५७ ॥ तैरित्युक्तो नृपोऽवोचत्, चिन्तयित्वा क्षणं हृदि । सैव स्त्री पुरुषो जज्ञे, कथंचन कि-

ऽल्पबलाभिधः । स परिभ्रमता तेन, पुंसा दृष्ट इतस्ततः ॥७१॥ स्थित्वा तस्य तटे दध्यौ, राजा मां लप्स्यते यदि । मारयिष्यति रोषान्धो, मारेण विविधेन तत् ॥ ७२ ॥ युक्तं ततोऽधुना मर्त्तुं, पतित्वा मेऽत्र कूपके । स्मृत्वाऽभीष्टं ततो देवं, चकाराराधनां च सः ॥७३॥ अरे दैव ! त्वया वैरिन्, वियोज्येत्थं स्वबन्धुतः । निर्भाग्याऽहं कृताऽत्रेदृग्, दुःखानां भाजनं भृशम् ॥ ७४ ॥ महाबलेन निःसीमतादृग्स्नेहेन तेन मे । समं प्रियतमेनात्र, वियोगो विदधे त्वया ॥७५॥ तमेव मेलयेस्तन्मे, प्रसद्यापि भवान्तरे । यतो यद्विदधासि त्वमवश्यं भवतीह तत् ॥ ७६ ॥ इत्युपालम्भमाना सा, दैवं पुंरूपधारिणी । कूपे झम्पाप्रदानाय, सज्जतां कर्तुमुद्यता ॥ ७७ ॥ चतुर्भिः कलापकम् । इतश्च स्वप्रियां पश्यन्, स सर्वत्र महाबलः । भ्रामं भ्रामं समागत्य, तस्यैवाह्नो निशागमे ॥ ७८ ॥ तस्यामेव प्रसुप्तोऽभूत्, देश्यकुड्यां श्रमातुरः । प्रियावियोगसंतप्तः, प्रमीलां प्राप नो पुनः ॥७९॥ कुत्र कुत्र मयेदानीं, द्रष्टव्या सेति चिन्तयन् । उक्तं मलयसुन्दर्या, शुश्राव च वचस्तदा ॥ १८० ॥ अहो एतदपूर्वं किं ?, प्रियाया इव भाषितम् । श्रूयते वनितावाक्यं, प्राणत्यागस्य सूचकम् ॥ ८१ ॥ ध्यात्वेति मा मा स्म मृथा, विलम्बस्व क्षणं शुभे ! । इति जल्पन् दधावेऽथ, यावत् शीघ्रं महाबलः ॥ ८२ ॥ तेनेति भणता तावत्, शरणं मे महाबलः । दत्ताऽन्धकूपके झम्पा, कुमारेणापि पृष्ठतः

मुञ्चन्त्यश्रुपरम्पराम् । दुःखसम्पूर्णहृदया, कम्पमानतनुर्जगौ ॥ ९६ ॥ कुमारः स्माह बाष्पौघनिर्मितान्धान्धुजीवनः । त्वमप्येवंविधे हाहा, पतिता व्यसनार्णवे ॥ ९७ ॥ वपुर्यष्ट्याऽनया भोगयोग्यया सुकुमारया । दुःखानि तानि सोढानि, त्वया तन्वि ! कथं कथम् ? ॥९८॥ शून्यारण्ये तदा तेन, पार्श्वात्ते व्यवहारिणा । जगृहे बालकः सोऽस्ति, कुत्रेदानीं मम प्रिये ! ॥९९॥ सा स्माहात्रैव नगरे, क्वापि मुक्तोऽस्ति तेन सः । ज्ञास्यतेऽनु कथं पुत्रो, मिलिष्यत्यावयोः कथम् ? ॥ २०० ॥ कुमारोऽब्रूत चेत् कूपादस्मादावां कथञ्चन । निर्यास्यावस्तदा चिन्ता, कर्त्तव्यैषाऽखिला खलु ॥१॥ विरहे मे त्वया नाथ !, वासरा गमिताः कथम् । इति पृष्टस्तया सर्वं, स्ववृत्तान्तं निजं जगौ ॥ २ ॥ अन्योऽन्यालापपीयूषपान-सम्प्रीणितश्रुती । चिरेण सङ्गतौ यावत्तत्र तौ संस्थितौ सुखम् ॥ ३ ॥ विभाता रजनी तावदागाच्चानुपदं नृपः । दृष्ट्वा द्वावपि कूपे तौ, जगादैवं च विस्मितः ॥ ४ ॥ युक्ता प्रियेण केनापि, नूनं मलयसुन्दरी । एषा नैसर्गिकाङ्गश्रीः, स्नेहालापं वितन्वती ॥ ५ ॥ अनुरूपमहो रूपं, सौभाग्यं यौवनं तथा । संयोगोऽप्येतयोर्युक्तः, पण्डितो भगवान् विधिः ॥ ६ ॥ देवदेव्योरिव स्वर्गे, कामरत्योरिवोच्चकैः । भातीदं मिथुनं लोके, सफलं जन्म चैतयोः ॥ ७ ॥ अभयं वामहो कूपाद्युवां निर्यातमप्युभौ । इत्यूचे स पुनर्लुब्धः, कन्दर्पो दर्पकान्धकः ॥ ८ ॥ रज्जुबद्धे

उभे कूपे, क्षेपयामास मञ्चके । एतयोश्चटतां येनाकर्षयामीति चाह सः ॥ ९ ॥ अथो मलयसुन्दर्या, प्रोचे कन्दर्प एष सः । समानुपदमायातो, राजा रागेण वल्लभ ! ॥ २१० ॥ कामान्धेनात्र येनाहं, भूरिघस्रान् कदर्थिता । मयि लुब्धस्ततो नूनमयं त्वां मारयिष्यति ॥ ११ ॥ कुमारः स्माह चेत्कान्ते !, कूपादस्मात्कथंचन । निर्गतस्तत्करिष्येऽहं, योग्यमेतस्य यद् ध्रुवम् ॥ १२ ॥ सा मैषीस्त्वं द्रुतं भद्रे !, चटैकां मञ्चिकां द्वयोः । इति ब्रुवन् कुमारः स, आरुरोहैक-मञ्चिकाम् ॥ १३ ॥ ततस्तौ मञ्चिके ऊर्ध्वं, लग्नः कर्षयितुं नृपः । आत्मोच्छेदाय पातालादिव सर्पकरण्डिके ॥ १४ ॥ कूपोपकण्ठमायाता, यावन्मलयसुन्दरी । तावन्मृदुगिरा राज्ञा, सुखेनोत्तारिता बहिः ॥ १५ ॥ महाबलकुमारस्तूपकण्ठं यावदाययौ । मूर्त्तं काममिवालोक्य, तावत्तं स व्यचिन्तयत् ॥ १६ ॥ निस्सीमरूपलावण्यो, ययैषोऽधिगतः प्रियः । सा किं विहीनरूपं मां, मन्यते ताडिताऽप्यलम् ? ॥ १७ ॥ ततो जीवत्ययं यावत्संमुखं वीक्षते स्म । तावन्नैवेयम-थवा, मणिवाञ्छा तृणे कथम् ? ॥ १८ ॥ छुर्या छिन्ना ततस्तावद्, रज्जुः प्रापत्ततः पुनः । कुमारः कूपतलकमनु-गम्य प्रियामिमाम् ॥ १९ ॥ झम्पां दातुं पुनः कूपे, समुत्तालाऽथ सुन्दरी । धृत्वा कृच्छ्रेण भूपेन, निन्ये सा निजमन्दि-रम् ॥ २२० ॥ कः किंनामा कथं चैष, मिलितस्ते कुतस्त्विह । इति पृष्टापि सा नाख्यत्, केवलं रुदती

स्थिता ॥ २१ ॥ आहारं नापि जग्राह, सा मुमूर्च्छ च दुःखतः । यदि द्रक्ष्यामि तं मोक्ष्ये, तदाहमिति चावदत्
॥ २२ ॥ कृत्वाऽथ यामिकायत्तां, मुक्त्वा तां चैकमन्दिरे । स्वयं जगाम राजा स, कन्दर्पो राज्यचिन्तया ॥ २३ ॥
भविष्यति कथं कूपे, निर्यास्यति कथं ततः । प्रियो मे चिन्तयन्तीति, वासरं साऽत्यवाहयत् ॥ २४ ॥ रतिं नाप्नु-
वती क्वापि, लुठन्ती निशि भूतले । दष्टाऽतिदुष्टसर्पेण, निर्गतेन कुतोऽपि सा ॥ २५ ॥ मम पादतले लग्न, एष
दुष्टो भुजङ्गमः । जल्पन्तीति चकारैषा, गुरुदेवनमस्क्रियाम् ॥ २६ ॥ आगतैर्यामिकैस्तत्र, निजघ्ने स भुजङ्गमः ।
तेभ्यो विज्ञाय तत्रागात्, व्याकुलः सोऽपि भूपतिः ॥ २७ ॥ कृतो विषप्रतीकारो, विशेषो नाभवत्पुनः । प्रत्युत
क्ष्वेडकल्लोला, बभूव चाधिकाधिकाः ॥ २८ ॥ इन्द्रियाणां ततश्चेष्टा, सर्वेषां नाशमागमत् । एक एवास्फुरत् श्वास-
स्तस्या वपुषि केवलम् ॥ २९ ॥ अनिच्छन्तीव तां द्रष्टुं, मन्येऽहं रजनी गता । सज्जिताङ्गीमिवाधातुं, व्युष्टेन स्फु-
रितं तदा ॥ २३० ॥ निःशेषनिष्ठितोपायस्ततो राजातिदुःखितः । पटहं वादयामासेत्युद्घोषणपुरस्सरम् ॥ ३१ ॥
सज्जीकरोति यो बालामिमां गरलमूर्छिताम् । रणरङ्गं गजं कन्यां, देशं चाप्नोति सोऽधुना ॥ ३२ ॥ न निषिद्धः
स केनापि, पटहः क्वापि पत्तने । निराशः स ततो जातः, कन्दर्पो नरनायकः ॥ ३३ ॥ अथैकेन कुतोऽप्येत्य,

नरेणाभिनवेन सः । पटहो विधृतः सोऽपि, विधृतो नृपपौरुषैः ॥ ३४ ॥ अनेन पटहो देव!, धृतस्तैरिति वादिभिः ।
नीत्वा स (ऽऽशु) भूपतेः पार्श्वे, स पुमान् दर्शितस्ततः ॥३५॥ दृष्टो मलयसुन्दर्या, स एवायमहो पुमान्। अन्धकूपात्ततः
प्राप, कथंकारं विनिर्ययौ ? ॥३६॥ केन दैवहतेनैष, पुनः पुनः बहिष्कृतः । को निर्गन्तुं यतो तस्मात्स्वयं शक्नोति
कूपतः ? ॥३७॥ ध्यायन्निति नृपो मङ्क्षु, विधायाकारसंवरम् । ऊचे साधो ! विधेहि त्वं, सज्जां मलयसुन्दरीम् ॥ ३८ ॥
येन तं रणरङ्गेभं, कन्यां देशं च ते ददे । सोऽप्यूचे नृपमादास्त्वमपरं मम किञ्चन ॥ ३९ ॥ देहि देशान्तरायातामेतां
मलयसुन्दरीम् । क्षणमात्रेण येनाहं, विदधामि निरामयाम् ॥ २४० ॥ (चतुर्भिः कुलकम्) सङ्कटे पतितो राजा,
ततः स्माह ददेऽप्यदः । आदेशान् यदि मे कांश्चित्, करोष्यनु नरोत्तम ! ॥४१॥ यद्वक्ष्यत्येष तदहं, कृत्वा सत्त्वाधिकः
क्षणात् । गृहीत्वा च निजां भार्यां, गमिष्यामीत्यचिन्तयत् ॥ ४२ ॥ प्रतिश्रुत्य नरेन्द्रोक्तं, ततोऽसौ नृपसंयुतः ।
पार्श्वे मलयसुन्दर्या, विषमूर्च्छायुजो ययौ ॥ ४३ ॥ तदवस्थां ततो दृष्ट्वा, दुर्लभां वल्लभामिमाम् । रुरोदाश्रुप्रवाहं
स, कुमारः प्रसभं सृजन् ॥ ४४ ॥ ऊचे चाहो नरेन्द्रास्या, बालायाः सर्वथा गताः । सर्वाश्चेष्टास्ततो नैव, श्वासस्प-
न्दोऽपि लक्ष्यते ॥ ४५ ॥ तथापि कारयाद्याय, भूपतेऽत्र महीतलम् । निरुद्धजनसञ्चारं, सिक्तं चामलवारिणा ॥ ४६ ॥

राजादेशेन सर्वं तन्नियुक्तैर्विदधे नरैः । नृपो लोकोऽपि तत्स्थानात्, बहिर्झटिति तस्थिवान् ॥ ४७॥ एकाकिना कुमारेण, प्रारेभे विषवालनम् । आलिख्य मण्डलं चक्रे, मन्त्रस्याप्यर्चनाविधिः ॥ ४८ ॥ कृत्वा ध्यानं महामन्त्रं, स्मृत्वा च कटिपट्टकात् । कृष्ट्वा मणिं कुमारेण, क्षालितोऽमलवारिणा ॥४९॥ तद्वारि नेत्रयोस्तस्या, यावत्तेन प्रचिक्षिपे । सा तावल्लोचने किञ्चित्, उन्मीलितवती शनैः ॥ २५० ॥ ततः क्षिप्तं मुखे नीरं, श्वासोऽपि स्फुरितस्ततः । युग्ममुद्घटितं चाक्ष्णोस्तयोः पुण्यामिव द्वयोः ॥ ५१ ॥ सिक्ता तेनाथ सर्वाङ्गं, मध्ये तद्वारि पायिता । समुत्तस्थौ कुमारस्यानन्दपूरेण सा समम् ॥५२॥ कुतस्त्वं प्रिय ! तस्माच्चान्धकूपान्निसृतः कथम् ? । कथं चक्रे त्वया सज्जदेहाऽहं चेत्युवाच सा॥५३॥ कुमार ऊचे भद्रेऽहं, रज्जुच्छेदेन पातितः । यावत्कूपे स्थितस्तावत्सर्पस्तत्रैव सोऽभवत् ॥५४॥ कूपभित्तीस्ततः सर्वाः, समन्तात्पश्यता मया । दृष्टा द्वारशिला तत्र, स सर्पो यत्र च स्थितः ॥ ५५ ॥ गत्वा छन्नं ततो द्वारं, शिला सा मुष्टिना हता । द्वारमुद्घटितं तत्र, सर्पश्चागात् पराङ्मुखः ॥ ५६ ॥ यावद्द्वारेण तेनाहं, प्राविक्षं साहसान्वितः । तावत्पृष्ठे फणी सोऽपि, दीपिकाधरवद्ययौ ॥ ५७ ॥ नूनमेषा सुरङ्गात्राकारि चौरेण केनचित् । ततः पुरः क्वचिद्द्वारमस्या गुप्तं भविष्यति ॥५८॥ पुमानिव ज्वलद्दीपधरो यद्यात्यहिः पुरः । तन्ममाऽद्यापि जागर्ति, कोऽपि पुण्यलवो ननु ॥५९॥

प्रमोदविवशोऽभवत् ॥ ७२ ॥ उवाच च शिरो धुन्वन्, कटरे शक्तिरस्य यत् । सुखेन सार्द्धमस्माकमस्याः प्रादायि जीवितम् ॥७३॥ तव किं नाम मे ब्रूहि !, पृष्टो राज्ञेति राजसूः । तस्मै सिद्ध इति स्वीयं, नामधेयमचीकथत् ॥ ७४ ॥ कल्येऽपीयं न भुक्तास्ति, किञ्चिद्वाला ततोऽधुना । जेमयोचितमेतां त्वमित्युवाच महीपतिः ॥ ७५ ॥ शर्कराक्षोदसंयुक्तमानाय्य क्वथितं पयः । कुमारेण स्वहस्तेन, यथेष्टं पायिताऽथ सा ॥ ७६ ॥ कुमारेण नृपः प्रोचे, गृहीत्वैनां व्रजाम्यहम् । मां प्रेषय निजं चोक्तं, कुरु त्वं सत्यवागसि ॥ ७७ ॥ रविवन्मेघवत्नीरराशिवच्च नरेश्वरः । नातिक्रामति मर्यादामन्यथैषा हता प्रजा ॥ ७८ ॥ अप्युक्तं पुरलोकेनार्पयेमामस्य बालिकाम् । तवास्तु भाषितं सत्यं, मिलतां दुःखिताविमौ ॥ ७९ ॥ इत्यादि बोधितो गूढकोपवह्निः शमीव सः । क्षणं तूष्णीं क्षणं चक्रे, वार्त्ता अन्याश्च भूपतिः ॥२८०॥ तमपृच्छच्च हे सिद्ध !, तवैषा भवतीह किम् ? । स स्माह गृहिणी देव !, वियुक्ता मिलिताऽधुना ॥८१॥ अथोचे भूपतिः साधो !, कुर्वेकं मे प्रयोजनम् । यथा हि मे शिरो नैव, दुःखे तिष्ठति कर्हिचित् ॥८२॥ ततस्त्वं लक्षणैर्यादृक्, भव्यो कोऽपि नरो यदि । लभ्यते दह्यते चापि, निक्षिप्यान्तश्चितं ततः ॥ ८३ ॥ रक्षा तस्याश्रिताया हि, हरेत्पीडां शिरःस्थिताम् । त्वया सम्पादितं तन्मे, भवत्वेतन्महौषधम् ॥ ८४ ॥ नूनं मलयसुन्दर्यां,

च किम् ? ॥ ९७ ॥ बहुप्रकारमित्यादिखिद्यमानाऽक्षिवारिभिः । दयिताय प्रयच्छन्ती, जलाञ्जलिमनारतम् ॥ ९८ ॥
यदि द्रक्ष्यामि भर्त्तारं, करिष्ये भोजनं ततः । इति निश्चित्य सा तस्थौ, सर्वचेष्टाविवर्जिता ॥ ९९ ॥ ॥ युग्मम् ॥
कुमारेणापि धीरेण, संवीक्ष्येतरततो भुवम् । गुर्वी विरचयांचक्रे, स्थाने तत्रेप्सिते चिता ॥ ३०० ॥ दृष्ट्वा तस्य
कुमारस्य, साहसं नागरो जनः । सम्भूयागत्य चात्यन्तं, दूनो भूपं व्यजिज्ञपत् ॥ १ ॥ अन्यायोऽयं यदेपोऽत्र, देव !
रक्षाभिषाद् गुणी । हन्यते पशुवत्सिद्धः, परोपकृतिकर्मठः ॥ २ ॥ ततो वरामिमां बालामादा मा दा स्म कर्हिचित् ।
एनं तथापि जीवन्तं, मुञ्चास्मद्वचसा प्रभो ? ॥ ३ ॥ ततोऽभाणि नृपेणैषा, न गृह्णात्यपि नाम मे । वीक्षते सम्मुखं
नैव, जीवत्यस्मिन्नरेश्वरे ॥ ४॥ ममेमां तु विना बालामात्मा तिष्ठति नो सुखम् । पतितः सङ्कटेऽमुष्मिन्, भवामि तदह
कथम् ? ॥ ५ ॥ ततो जीवाभिधानेन, मन्त्रिणाऽभाणि निर्दयम् । अहो किञ्चिन्न वक्तव्यं, वराको म्रियतामयम्
॥ ६ ॥ नरेश्वरोऽपि मन्त्री च, महापापावुभाविमौ । महिलामात्रकार्येण, नररत्नं हतो यतः ॥ ७ ॥ कुरुतोऽनर्थ-
मेतौ यत्, दुर्मती क्षारदम्भतः । क्षार एवानयोर्मूर्ध्नि, निश्चितं तद्भविष्यति ॥ ८ ॥ इत्यन्योऽन्यं ब्रुवाणः स, लोकः
स्वस्थानमीयिवान् । कुमारोऽपीष्टदेवानां, चकार स्मरणं क्षणम् ॥ ९ ॥ हाहारवेण लोकानां, सार्द्धं सुभटवेष्टितः ।

कुमारः काष्ठनिचितां, प्रतस्थेऽथ चितां प्रति ॥ २१० ॥ लोकानां हृदये शोकः, कुमारोऽपि चितान्तरा । प्रविष्टो निर्गतश्चाशु, तेषामश्रुभरः परम् ॥ ११ ॥ प्रज्वालितो नृपयुक्तैः, समन्ताज्ज्वलनो नरैः । सार्द्धं समस्तलोकानामङ्गेष्वसुखवह्निना ॥ १२ ॥ प्रशसंस जनस्तस्य, धीरत्वं ज्वलितेऽनले । सीत्कारमात्रमप्युच्चैरश्रृण्वन् भूपजन्मनः ॥ १३ ॥ अथ निर्ज्वलितप्राये, ज्वलने राजपौरुषाः । स्वामिने कथयामासुः, यथाविहितमात्मनः ॥ १४ ॥ तस्यां रात्रौ नृपं मुक्त्वा, जीवामात्यं च सर्वथा । निःशेषे नगरे तत्र, निद्रा कस्यापि नाययौ ॥ १५ ॥ प्रभातसमये जाते, स सिद्धः क्षारपुट्टलम् । कृत्वा शीर्षे समायासीत्, श्मशानेन पुरे पुनः ॥ १६ ॥ दृष्ट्वा तं विस्मितो लोको, जगादानन्दितो भृशम् । हंहो सत्पुरुषेदं किं ?, शीर्षे त्वं चागतः कुतः ? ॥ १७ ॥ तस्याश्चिताया गृहीत्वा भस्म भूपस्य हेतवे । आयातोऽस्मीति कथयन्, स ययौ राजमन्दिरम् ॥ १८ ॥ स रक्षामर्पयामास, भूभृते कथयन्निति । प्रक्षिप त्वं निजे शीर्षे, रक्षां रोगः प्रयातु ते ॥१९॥ राजोचे किमहो सिद्ध !, न दग्धस्त्वं चिताग्निना !। कुमारोऽचिन्तयच्छद्म, कर्त्तव्यं छद्मनो ननु ॥ २२० ॥ ऊचे चाहं नराधीश !, दग्धः सत्त्वेन मे पुनः । समायाताः सुरास्तत्र, सिक्तस्तैः सुधया चिता ॥ २१ ॥ जीवितोऽहं पुनस्तेन, गृहीत्वा भस्मपुट्टलम् । तव योग्यमिहायातः, कुरु त्वं निजजल्पि-

तम् ॥ २२ ॥ राजा दध्यौ जनानां हि, वञ्चयित्वा दृशो बहिः । स्थिते धूर्त्तेऽत्र चितायां, ज्वालितो ज्वलनो भटैः ॥ २३ ॥ ज्ञात्वाऽथ दयितं तत्रायातं मलयसुन्दरी । आरक्षकयुता प्राप्ता, दृष्ट्वा चोत्कण्ठिता भृशम् ॥ २४ ॥ एकान्तं कारयित्वा च, सर्वं पप्रच्छ तं पतिम् । प्रविष्टोऽपि कथं नाथ !, न दग्धस्त्वं चिताऽग्निना ॥ २५ ॥ मन्दं मन्दं बभाषेऽथ, प्रियेऽहं निर्ययौ तदा । सुरङ्गया यया तस्मादन्धकूपाद्भयङ्करात् ॥ २६ ॥ सुरङ्गाया मुखे तस्याः, गुर्वी च रचिता चिता । प्रविष्टे मयि तन्मध्यं, यदा प्रज्वालितोऽनलः ॥ २७ ॥ युग्मम् । सुरङ्गायास्तदा द्वारमुद्घाट्यान्तः प्रविश्य च । पुनः पिधाय तद्द्वारं, तथैवाहं स्थितोऽन्तरा ॥ २८ ॥ ज्वालं ज्वालं ततो वह्नौ, निर्वाणे द्वारमादरात् । उद्घाट्याहं च निर्गत्य, क्षेमेणात्र समागतः ॥ २९ ॥ इदं गुह्यं त्वया कान्ते !, प्रकाश्यं नैव कस्यचित् । येनैष भूपतिर्दुष्टो, मम छिद्राणि पश्यति ॥ ३३० ॥ अत्रान्तरे समागत्य, नृपेणाभाणि सिद्ध ! भोः । अद्येमां भोजयात्मीयां, भार्यां मलयसुन्दरीम् ॥ ३१ ॥ कथयित्वा ततस्तेन, दयिता भोजिता निजा । पश्चादुक्तं मया राजंस्तव कार्यमसाध्यत ॥ ३२ ॥ तन्मां प्रहिणु गच्छामि, भार्यामादाय सम्प्रति । सिध्यतात्प्रतिपन्नं ते, मा नेशत्सूनृतव्रतम् ॥ ३३ ॥ नृपेण प्रेषिता दृष्टिर्जीवामात्यस्य सम्मुखम् । क्षणं विमृश्य मन्त्री स, ततो लग्नः प्रजल्पितुम् ॥ ३४ ॥ अहो सिद्ध !

त्वया तावत्, कृतमेकं प्रयोजनम् । द्वितीयं चापि भूपस्य, कुरु सत्त्वमहोदधे ! ॥ ३५ ॥ पुरस्यास्यैव नेदिष्टे, छिन्नटङ्कस्य भूभृतः । विषमार्द्धतटस्थोऽस्ति, चूत एकः सदाफलः ॥ ३६ ॥ आनेतव्यानि तस्यापि, शीतलानि फलानि भोः ! । तत्त्वया छिन्नटङ्कस्य, प्रस्थमारुह्य मुच्चकैः ॥ ३७ ॥ उपरिष्टात्तस्य चूतस्य, देया झम्पा ततस्त्वया । फलान्यादाय दातव्या, पुनर्झम्पा भुवं प्रति ॥ ३८ ॥ पश्चादत्र समागत्य, फलान्येतानि भूभुजे । अर्पणीयानि येनास्य, पित्तपीडोपशाम्यति ॥ ३९ ॥ ततो दध्यौ कुमारोऽयं, क्षुद्रादेशोऽतिदुष्करः । कर्त्तव्यं हि मया तच्च, बुद्धिः क्वापि न खिद्यते ॥ ४० ॥ कार्येऽस्मिन्नकृतेऽनाप्तभार्योऽहं मृत एव तत् । द्वाभ्यामपि प्रकाराभ्यामागतं मरणं मम ॥ ४१ ॥ कुतोऽपि चेद्विधिवशात्, क्षुद्रादेशं करोम्यमुम् । तज्जीवितं कलत्रं च, द्वयमप्यास्ति मेऽधुना ॥ ४२ ॥ ध्यात्वेत्युवाच हे मन्त्रिन्, ! राज्यकार्यं करोम्यदः । इति ब्रुवन् कुमारो द्राग्, उत्तस्थावासनात्ततः ॥ ४३ ॥ पतत्सु दुःखपूरेण, दयितानयनाश्रुषु । कुमारश्छिन्नटङ्काख्यं, प्रतस्थे तं गिरिं प्रति ॥ ४४ ॥ यथा यथाऽद्रिमारोहत्, कुमारः स तथा तथा । लोकानां हृदये शोको, हर्षश्चामात्यभूभुजोः ॥ ४५ ॥ पर्वताग्रं समारूढ, उदयाद्रिमिवार्यमा । ततो नृपनैरस्तस्य, दूरे चूतः स दर्शितः ॥४६॥ न्यायस्थितेन यत्किञ्चित्, मयाऽस्ति शुभमर्जितम् । ततस्तस्य प्रभावेन, सफलं

मेऽस्तु साहसम् ॥४७॥ इति जल्पन् रसालं तं, लक्षीकृत्य स साहसी । झम्पासम्पातमातेने, लोके हाहारवे सति ॥४८॥ पतन् वेगेन शृङ्गात् स, क्षणेनागाददृश्यताम् । कुमाराहितकर्तृणां, मूलतः पुण्यराशिवत् ॥ ४९ ॥ अहो अन्याय !! आः पापमस्यास्थीनि पृथग् पृथग् । भूत्वा किञ्चिद्भविष्यन्ति, गतान्यमिलितानि वै ॥ ३५० ॥ इति ब्रुवन्तस्ते सर्वे, शङ्कमानारत्वमङ्गलम् । नरेन्द्रस्य पुरस्यापि, व्यावृत्य स्वगृहान् ययुः ॥ ५१ ॥ राजपुम्भिः समाख्याते, निःशेषे नृप-मन्त्रिणौ । कृतार्थं मन्यमानौ स्वं, गमयामासतुर्निशाम् ॥ ५२ ॥ सञ्जातेऽथ प्रभाते स, सिद्धो मध्येपुरं वहन् । शिरस्याम्रफलाकीर्णं, करण्डं पुनराययौ ॥ ५३ ॥ महात्मा जीवितो नूनमेष देवानुभावतः । कृतभूपालकर्त्तव्यः, क्षेमेणात्र समागतः ॥ ५४ ॥ ब्रुवाणैरिति हृष्टास्यैर्विस्मितैर्मिलितैः पथि । अनेकधा पृच्छ्यमानः, स्थाने स्थाने पुरी-जनैः ॥५५॥ प्रष्टव्यं नाधुना किञ्चिद्युष्माभिस्तानिति ब्रुवन् । जनैः परिवृतो राज्ञः, समीपे स ययौ पुमान् ॥५६॥ त्रि-भिर्विशेषकम् । कृष्णास्येनातिभीतेन, विस्मितेन च भूभुजा । यावदाभाषितः किञ्चित्स पुमांस्तत्र संसदि ॥५७॥ मन्त्रिणा तावदाख्यायि, कृत्वा कार्यं सुदुष्करम् । हे सिद्ध ! त्वं किमायासीः, कुशलेनात्र सत्वरम् ? ॥ ५८ ॥ एवमित्यालपन्नेष, शीर्षादुत्तार्य मुक्तवान् । सहकारकरण्डं तं, तयोरासीनयोः पुरः ॥ ५९ ॥ ऊचे चैतानि चूतस्य, फलान्यादद्ध्वमत्र च ।

यूयं कुटुम्बसंयुक्ताः, पित्तं शाम्यतु सर्वथा ॥३६०॥ भीताः सर्वेऽपि मौनने, यावत्तस्थुर्नृपादयः । तावदुद्घाटयांचक्रे, सिद्धेनाम्रकरण्डकः ॥ ६१ ॥ द्वित्राण्यादाय चूतानि, भूपमापृच्छ्य चागमत् । पार्श्वे मलयसुन्दर्या, दुःखिताया नृपात्मजः ॥ ६२ ॥ ततोऽसौ हृष्टहृदया, मयूरीव घनागमे । प्रतिपत्तिं विधायोच्चैः, पप्रच्छोदन्तमेतकम् ॥ ६३ ॥ स स्माह वल्लभे ! पूर्वं, यो योगी वह्निकुण्डके । दग्धः परिचितो मे स, मृत्वाऽत्र व्यन्तरोऽभवत् ॥ ६४ ॥ स चूते निवसत्यत्र, भागधेयेन नौ प्रिये ! । प्रजल्पन्निपतंश्चापि, तेनाहमुपलक्षितः ॥ ६५ ॥ स्वकराभ्यां ततस्तेन, प्रतीष्टोऽहं द्रुतं पतन् । उक्तश्चोपकृतेः कर्त्ता, मा भीस्त्वं नृपनन्दन ! ॥ ६६ ॥ आत्मीयः कथितस्तेन, वृत्तान्तः स्वो मयापि च । इति संलपतो रात्रिर्व्यतीयायावयोर्द्वयोः ॥ ६७ ॥ व्यन्तरेण ततस्तेनाभाणि त्वं भो मवातिथिः । कुमारेष्टातिथे ! किं किं, तवातिथ्यं करोम्यहम् ॥ ६८ ॥ मयोचे कार्यसांसिद्ध्या, कन्दर्प्पस्य नरेशितुः । निर्व्यूढगीर्यथाऽहं स्यां, विधेहि त्वं तथा सुर ! ॥ ६९ ॥ ततोऽभाणि सुरेणैष, नृपतिस्त्वां जिघांसति । शिक्षयाम्यहमेवं तं, यद्यत्र संमतं भवेत् ॥ ३७० ॥ मयोक्तमियताऽप्येष, विरुद्धव्यसनाद्यदि । न निर्वर्तयति तत्सर्वमपि तस्य विधास्यते ॥ ७१ ॥ यदा कदापि दुःसाध्यं, किञ्चित्ते स्यात्प्रयोजनम् । तदाऽहं स्मृतमात्रोऽपि, करिष्यामि सहायताम् ॥ ७२ ॥

इत्युक्त्वा तेन चानीय, कुतोऽप्येकः करण्डकः। गृहीतैश्चूततस्तस्मात्कलैराम्रफलैर्भृतः ॥ ७३ ॥ गृहीत्वाऽथ करण्डं तं, माझ्यागान्नगराद्बहिः। स देवोऽवददेवं च, प्रति मां तत्र संस्थितः ॥ ७४ ॥ कुमारैनं करण्डं त्वं, नीत्वाऽर्पय महीपतेः। समेष्यामि त्वया सार्द्धमहमन्तर्हितः पुनः ॥ ७५ ॥ तत्र प्राप्तस्य यद्यन्मे, भविष्यत्युचितं पुनः। तत्तत्सर्वं करिष्यामि, तस्य प्रच्छन्नसंस्थितः ॥ ७६ ॥ मयाऽऽनीय करण्डः स, ततो राज्ञे समर्पितः। अनुज्ञाप्य च भूपालमहं पश्चादिहागमम् ॥ ७७ ॥ इतस्तस्य करण्डस्य, मध्यादुच्छलितः किल। नृपं खादाम्यमात्यं वा, पुनः पुनरिति स्वरः ॥ ७८ ॥ सिद्धोऽयं निश्चितं कोऽपि, गूढात्मा सिद्ध एव यत्। दुष्कराण्यपि कार्याणि, करोतीदृशलीलया ॥ ७९ ॥ तदाम्रफलदम्भेन, नूनमेषा बिभीषिका। काप्यानीयामुना मुक्ताऽत्रास्माकं क्षयकारिणी ॥ ३८० ॥ जल्पन्तामिति तं भूपं, चकितं सचिवोऽहसत्। बिभीषिकामुखे धूलिस्तथोच्चैः कथयन्निति ॥ ८१ ॥ अहंयुर्वार्यमाणोऽपि, यावत्तस्यान्तिकं ययौ। तावत् शुश्राव तं शब्दं, स्वमृत्योर्दुन्दुभेरिव ॥ ८२ ॥ युग्मम्। ततो यावत्स्वहस्तेन, तेनाम्रफलवाञ्छया। द्वारमुद्घाटितं तस्य, स्वस्यापुण्यनिधेरिव ॥ ८३ ॥ तावत्कृतान्तधाटीव, त्रासयन्ती जनं द्रुतम्। वज्रानलमहाज्वाला, तन्मध्यादुत्थिता पुनः ॥ ८४ ॥ दग्धः पतङ्गवदुष्टस्तया वज्राग्निकीलया। सहसा सचिवः

सैष, जीवो निर्जीवतां गतः ॥ ८५ ॥ लग्नः काष्ठेषु सौधस्य, दग्धुं प्रारब्ध पावकः । ततो भीतेन सिद्धः स, भूपेनाकारितो द्रुतम् ॥ ८६ ॥ मद्द्वेषेण सुरेणात्र, कृतं किञ्चिद्भविष्यति । चिन्तयन्निति सिद्धः स, समागाद्राजसन्निधौ ॥ ८७ ॥ उदित्वा सर्वमेतस्मै, राज्ञाऽवादि प्रसद्य भोः ! । सिद्धास्मासु कृपां कृत्वाऽदः शान्तिं नय विद्रवम् ॥ ८८ ॥ भविष्यति कथं शान्तिरितिचिन्तयताऽमुना । सिद्धेनाक्षेपि तत्राम्बु, शान्तोऽग्निः सर्वथा ततः ॥ ८९ ॥ पिहितोऽथ करण्डः स, क्षेमेणास्थात्तथैव च । तस्यासन्ने परं कोऽपि, भीत्या नास्थात्कथञ्चन ॥ ३९० ॥ अथोद्घाट्य करण्डं तं, स सिद्धः सात्त्विकाग्रणीः । ततः क्षेमेण जग्राह, सहकारफलोत्करम् ॥ ९१ ॥ स्वहस्तेनार्पयामास, राज्ञे विस्मितचेतसे । अन्येभ्योऽपि परं राजा, नाग्रहीत्तानि भीतितः ॥ ९२ ॥ धीरयित्वाऽथ सिद्धेन, ग्राहितस्तानि भूपतिः । महामात्यपदे तस्यातिष्ठिपज्ज्येष्ठनन्दनम् ॥ ९३ ॥ नृपः पप्रच्छ हे सिद्ध !, छलितं किमिदं भयम् ? । येनैवं गमितोऽमार्गं, महामात्यो ममैष हा ॥ ९४ ॥ सिद्धः स्माह नराधीश !, तवान्यायतरोरयम् । अङ्कुरोऽतः परं पुष्पं, फलं चानुभविष्यसि ॥ ९५ ॥ यतो ये पालयन्त्यत्र, नृपा न्यायं महीतले । नाप्नुवन्त्यापदां लेशमपि ते स्फीतसम्पदः ॥ ९६ ॥ ततो विसृज मामद्य, स्वभार्यासंयुतं नृपः । पालयासा-

दितं राज्यं, निष्प्रत्यूहमिदं कुरु ॥९७॥ सामन्ताद्यास्ततः प्रोचुः, कुरु स्वामिन्निजं वचः । अनयेनैष यत्साधुर्युक्तः कोपयितुं न हि ॥९८॥ ततो मलयसुन्दर्यामनुरागवशंवदः । नृपो दध्यावसौ सिद्धः, शक्तिमान् मन्त्रतन्त्रवित् ॥९९॥ एष बाह्यानि कार्याणि, साधयामास लीलया । कारयामि ततः स्वाङ्गे, किञ्चित्कार्यं सुदुष्करम् ॥ ४०० ॥ करिष्येऽहं तथा नाङ्गं, यथाऽयं कारयिष्यति । पश्चादकृतकार्यस्तां, कथं याचिष्यते प्रियाम् ? ॥ १ ॥ एवं कृतेऽत्र मे किञ्चित्, विगानं न भविष्यति । ध्यात्वेत्युवाच हे सिद्धार्प्पयिष्यामि तव प्रियाम् ॥ २ ॥ किन्तु त्वं बहुसामर्थ्यस्तवासाध्यं न किञ्चन । तृतीयं कुरु कार्यं तत्, पूर्वं यन्मे हि मानितम् ॥ ३ ॥ पश्याम्यहं स्वनेत्राभ्यां, सर्वाङ्गं न तु पृष्ठकम् । तत्त्वं कुरु तथा वीक्षे, यथा तदपि मध्यवत् ॥ ४ ॥ क्षुद्रादेशानहो एष, वितरन्नैव तिष्ठति । ध्यायन्निति कुमारस्तु, साक्षेपमिदमब्रवीत् ॥ ५ ॥ नेक्षते कोऽपि पृष्ठं स्वमसद्ग्राहस्तदेष किम् ? । स्वपृष्ठदृष्टौ ते कीदृग् ?, कार्यसिद्धिर्नराधिप ! ॥ ६ ॥ ततः सिद्धो नरेन्द्रस्य, ग्रीवानाडीं तथा बलात् । आचकर्षातिरोषेण, दन्तैर्दन्तान्निपीडयन् ॥ ७ ॥ यथा भ्रान्त्वा मुखं जातं, घण्टास्थानेऽस्य तत्क्षणात् । मुखस्थाने पुनर्यन्त्रनरस्येव कृकाटिका ॥ ८ ॥ युग्मम् । विलोकय निजं पृष्ठं, सिध्यत्विष्टं नरेन्द्र ! ते । इति जल्पति सिद्धे स, चुकोप सचिवो नवः

च केषांचित्, स गत्वा पुनरागमत ॥ २२ ॥ प्रत्यक्षं सर्वलोकानां, पापोऽयमिति न्यत्कृतः । निर्वतर्स्यत्यधुना नूनं, दुष्टादध्यवसायतः ॥ २३ ॥ ध्यायन्नित्यपरां नाडीं, कन्धरायाश्चकर्ष सः । नरेन्द्रस्य ततो वक्त्रं, वलित्वा स्थान-मागतम् ॥ २४ ॥ अवरोधरततः सिद्धं, प्रशशंस प्रमोदभाग् । ऊचे च प्रार्थयस्वाहो, यत्ते किञ्चन रोचते ॥ २५ ॥ स स्माहैकामिमामेव, भार्यां मलयसुन्दरीम् । मह्यं दापयतास्तीह, यदि शक्तिलवोऽपि च ॥ २६ ॥ ततस्ताभिर्भृशं प्रोचे, प्रत्यूचे न पुनर्नृपः । दध्यौ चेयं कथं स्थाप्या!, यान्ती मलयसुन्दरी ॥२७॥ अत्रान्तरे समुत्तस्थौ, मन्दुरायां हुताशनः । दारुणः पूरयन् ज्वालासहस्रैर्गगनाङ्गणम् ॥ २८ ॥ ततः प्रोचे नरेन्द्रेण, वरो मम तुरङ्गमः । दह्यते सिद्ध ! तं कर्ष, कुरु तुर्यं प्रयोजनम् ॥ २९ ॥ प्रियामादाय गच्छेस्त्वं, पश्चादद्यैव वाञ्छया । ततो ब्रूते जनोऽद्यापि, कुग्राहं न नृपोऽस्यति ॥ ४३० ॥ एतावतापि यद्दुष्टाध्यवसायं जहाति न । पापोऽयं तदमुष्यात्र, योग्यं कर्तुं करोमि तत् ॥ ३१ ॥ ध्यायन्निति कुमारोऽथ, प्रवेष्टुं तं हविर्भुजम् । उत्पन्नद्विगुणोत्साहो, बभूव प्रगुणः क्षणात् ॥ ३२ ॥ हाहाकारपरे लोके, बहुधा वारयत्यपि । मनसा भूपतिं भूरि, निन्दत्याक्रोशति क्रुधा ॥ ३३ ॥ कुमारः स्मृतदेवः स, चिन्तितात्ममनोरथः । पतङ्गवत्पपातासौ, लोकानामश्रुभिः समम् ॥ ३४ ॥ सन्तुष्टे नृपतौ लोके, स्फुरच्छोकभेर

॥ ४७ ॥ ततोऽसौ पालयन् राज्यं, न्यायेन जनसम्मतः । सिद्धराज इति ख्यातोऽरिवर्गं दमयन्नभूत् ॥ ४८ ॥ आगन्तव्यं त्वया कार्ये, स्मृतेन विषमे पुनः । इत्याभाष्य स सिद्धेन, विसृष्टस्त्रिदशोऽगमत् ॥४९॥ देशान्तरादथायातो, बलसारः स सार्थपः । तत्रोपायनमादाय, नृपस्य मिलितो मुदा ॥४५०॥ तेनोपलक्षिता तत्रासीना मलयसुन्दरी । तयापि सार्थवाहः स, ततो भीतो गृहं गतः ॥ ५१ ॥ अहो द्वीपान्तरात्तस्मादिहैषा कथमागमत् । भार्याभावेन राज्ञोऽस्य, कथं सङ्घटिता तथा? ॥ ५२ ॥ मयाऽस्या यत्कृतं तच्चेत्, राज्ञेऽसौ कथयिष्यति । शरणं मरणं तन्मे, स दध्याविति दुःखितः ॥ ५३ ॥ ऊचे मलयसुन्दर्या, बलसारो नृपैष सः । अहं कदर्थिता येन, गृहीतोऽस्ति सुतश्च मे ॥ ५४ ॥ मुद्रितानि क्रयाणानि, सकुटुम्बो धृतोऽथ सः । राज्ञा तस्यापराधोऽपि, प्रोक्तस्तेनेति चिन्तितम् ॥ ५५ ॥ मोक्षो नैवास्ति मे किञ्चिदुपायः कोऽत्र विद्यते ? । सिद्धिं याति च चेत्पुण्यैर्नूनं क्षेमं तदैव मे ॥५६॥ राज्ञोऽस्य सबलो वैरी, सूरः परिचितो मम । चन्द्रावत्याः पुरः स्वामी, श्रीवीरधवलोऽस्ति सः ॥ ५७ ॥ निर्जित्यैनं नृपं मां स, मोचयिष्यति साम्प्रतम् । तस्याहं मानयाम्यष्टौ, द्रम्मलक्षाणि मानुषैः ॥५८॥ अष्टौ द्वीपान्तराद् ये चानीताः सन्ति गजा वराः । कथापयामि तस्याहं, तानप्युत्तमलक्षणान् ॥ ५९ ॥ दक्षः सोमाभिधस्तेन, प्रेषितो निजपुरुषः । शिक्षयित्वा

पत ॥ ७३ ॥ पृथ्वीस्थानाधिपः सूरः, सूरपालो नरेश्वरः । चन्द्रावतीपुरीस्वामी, श्रीवीरधवलोऽपि च ॥ ७४ ॥ एतौ द्वावपि देव! त्वामभि योद्धुं निरर्गलम् । आगतौ प्लावयन्तौ क्ष्मामिव पूर्वापराम्बुधी ॥ ७५ ॥ बलसारस्त्वया योऽस्ति, गृहीतः सार्थनायकः । तेन सार्द्धं महास्नेहोऽनयो राज्ञोर्द्वयोरपि ॥ ७६ ॥ सर्वेषां बान्धवायन्ते, वदान्या व्यवहारिणः । वर्षन्तो वारिदाः कं न, प्रीणन्ति मधुरस्वराः ? ॥ ७७ ॥ मित्रवद्बन्धुवत्पुत्रवदमुं व्यसनस्थितम् । उपेक्षेते कथं सार्थवाहमस्मत्प्रभू प्रभो! ॥७८॥ बलसारोऽयमावाभ्यां, कृतस्नेहो भृशं सह । कुलं नु तव वास्तव्यं, तन्मोक्तुं देव! युज्यते ॥७९॥ कथापयत इत्येतावस्माकं स्वामिनौ तव । मुच्यतामेष सत्कृत्य, त्वया राज्यं च भुज्यताम् ॥४८०॥ क्षम्यतामपराधोऽपि, तस्यैकोऽर्थवतो भृशम् । छिद्यते फलितो वृक्षः, किं पत्रैर्दूषिताङ्गणः ? ॥ ८१ ॥ कक्षीकृतोऽस्मदीशाभ्यां, दुर्निग्राह्योऽस्त्ययं धनी । गर्जत्सिंहं वनं द्रष्टुमपि किं कुञ्जरः क्षमः ? ॥ ८२ ॥ सूरोऽप्यल्पबलोऽसि त्वं, तौ चासङ्ख्यबलौ नृपौ । अपारे वारपारेऽस्मिन्, मा भूस्त्वं सक्तुमुष्टिवत् ॥ ८३ ॥ मोचयिष्यत एवैनं, त्वां पुनः शिक्षयिष्यतः । नृपौ द्वावपि सिंहे हि, सज्जितांहौ गजेन किम् ? ॥ ८४ ॥ मा स्म भूराततायी त्वं, लङ्केश इव मा मुहः । दीर्घं चिन्तय कार्यं चार्जितं राज्यं चिरं कुरु ॥ ८५ ॥ इति दूतमुखात्सर्वं, श्रुत्वा सिद्धनरेश्वरः । जनकश्वशुरौ तत्र, ज्ञात्वायातौ

वासे संस्थापिताऽमुना ॥ ९८ ॥ चतुरङ्गचमूयुक्तो, रणरङ्गेभसंस्थितः । सिद्धराजः प्रमोदेन, पुरतो निःसृतो पुरात् ॥ ९९ ॥ रणतूर्यरवौघोऽभूत्, सैन्ययोरुभयोरपि । सर्वान् बधिरयन् लोकान्, ब्रह्माण्डं स्फोटयन्निव ॥ ५०० ॥ विविशेते रसेनाजेर्युयुधाते उभे बले । वर्ण्यमाने महाभट्टैः, सुभटानां पराक्रमैः ॥ १ ॥ शस्त्रतेजोजलाक्रीडद्राजहंसासिवीचिका । पुण्डरीकयुता राजदाजिभूः सिन्धुवत्तदा ॥ २ ॥ वचनस्य वचोघातं, घातस्यातिसुदुरसहम् । सिंहनादं तथा सिंहनादस्यापि भटा ददुः ॥ ३ ॥ गोत्रं जातिर्भुजादण्डविक्रमोऽद्भुतकर्म च । प्रोद्घट्ट्यन्ते मिथस्तत्र, जयश्रीलग्पटैर्भटैः ॥ ४ ॥ वरोत्तमाङ्गचिकुरा, रणरङ्गोत्थिता बभुः । मनःप्रज्वलितक्रोधानलोत्थधूमपुञ्जवत् ॥ ५ ॥ संग्रामरसरोमाञ्चैर्भिन्ना देहा न चायुधैः । मध्यभेदो यतो बाह्यभेदात्स्यादप्रतिक्रियः ॥ ६ ॥ कृपाणबिम्बितेऽप्यङ्गे, कम्पो वीरव्रताङ्ककृत् । इत्याकृष्य कृपाणांस्ते, नाधुन्वन् सुभटोत्तमाः ॥ ७ ॥ स्वर्गाङ्गनोत्सुकैरेभिरहं तिमिरवान् कृतः । ररक्षार्कः करव्याजान्म्रियमाणान् भटानिति ॥ ८ ॥ रथिनो रथिभिः सार्द्धं, सादिनः सादिभिः समम् । गजारोहा गजारोहैः, समं तत्र डुढौकिरे ॥ ९ ॥ शरैरन्तरिते सूर्ये, रणे रात्रिकलान्विते । अन्योऽन्यशस्त्रसङ्घट्टाग्नयो भान्ति स्म दीपवत् ॥ ५१० ॥ प्रसरद्बाणसूत्कारे, रणझल्लीभयङ्करे ।

शस्त्राणि, मुहुर्मुहुरपातयत् । सिद्धराजस्तयो रक्षन्, शरीरमुभयोरपि ॥ २४ ॥ निस्तेजस्कौ कृतौ तेन, गुरुशुक्राविवेन्दुना । तावुभावपि राजानौ, चिन्ताब्धौ पतितौ ततः ॥ २५ ॥ सिद्धराजेन तौ वीक्ष्य, वीक्षमाणावधोभुवम् । मार्जिताविव कूर्चेन, मष्याः कृष्णास्यपङ्कजौ ॥ २६ ॥ इत्थमित्थं च कर्त्तव्यं, त्वयेत्युक्त्वाऽमरस्य च । शरोऽकारि करे लेखोऽपि पूर्वं लिखितः स्वयम् ॥२७॥ युग्मम् । ततस्तेन शरो मुक्तो, मुखे लेखं दधत् द्रुतम् ।नरेन्द्रान्नमयन्मोहं, जनानां जनयन् ययौ ॥ २८ ॥ इत्थमायान्तमालोक्य, तं भूपालावुभावपि । चित्ते चमत्कृतौ पृथ्वीस्थानचन्द्रावतीपती ॥ २९ ॥ अवतीर्य नभोमार्गात्, स शरोऽवततार च । प्रदक्षिणात्रयं सूरपालाख्यं परितो नृपम् ॥ ५३० ॥ पुनः पुनः प्रणम्योच्चैर्नृपपादौ विमुच्य च । लेखं तत्र सपद्यागात्, सिद्धराजकरं पुनः ॥ ३१ ॥ चरितं तस्य बाणस्य, दृष्ट्वा सर्वेऽपि विस्मिताः । इत्यूचुर्ज्ञायते नैव, परमार्थोऽस्य कश्चन ॥ ३२ ॥ सूरपालो गृहीत्वाऽऽशु, लेखं तं निजपाणिना । छोटयित्वाऽक्षरश्रेणीं, वीक्षाञ्चक्रे पुनः पुनः ॥ ३३ ॥ परितो मिलिताः सर्वे, लेखार्थं श्रोतुमुत्सुकाः । तूष्णीकां सैन्यकाश्चक्रुः, स्वयं राजा त्ववाचयत् ॥ ३४ ॥ स्वस्ति श्रीमति राजेन्द्रसूरपालाजिभूतले । पूज्यश्रीसूरपालस्य, तातस्याङ्घ्रिसरोरुहान् ॥ ३५ ॥ श्रीवीरधवलस्यापि, श्वशुरस्य विशेषतः । महाबलः प्रणम्यास्मात्,

स्ततः । स्वः स्वो मलयसुन्दर्या, कुमारेणापि मूलतः ॥४९॥ ईदृक्षेऽहो महादुःखे, पतिता पुत्रिका मम । जाता राज-कुलेऽप्येषा, रुलिता रोरवत्पुनः ॥५५०॥ हा वत्से! स्वच्छहृदये, कोमले कुसुमादपि । सोढानि तीव्रदुःखानि, त्वयाऽमूनि ? कथं कथम् ॥ ५१ ॥ बहुप्रकारमित्यादि, शोचयन्तः पुनः पुनः । अङ्गं मलयसुन्दर्याः, पित्राद्याः पाणिनाऽस्पृशन् ॥ ५२ ॥ सूरपालो जगादाथ, वत्सेऽस्मिन् व्यसनार्णवे । प्रक्षिप्ताऽसि मयैव त्वमविचारेण पापिना ॥ ५३ ॥ तत्क्षन्तव्यं त्वया सर्वं, सुप्रसन्ना भवाधुना । जितकोपा त्वमेवासि, ज्ञाततत्त्वा त्वमेव हि ॥५४॥ तवापूर्वा कृपा वत्स,! साहसं च मतिस्तथा । जनानुरागः शौर्यं च, धैर्यं च सुकृतान्यपि ॥ ५५ ॥ इत्यादि बहुधा पुत्रं, प्रशंसन्तो महाबलम् । पप्रच्छुः पितृमुख्यास्ते, वत्स! वत्सासुतः क सः ? ॥५६॥ गृहीत्वा तेन पापेन, वणिजा स कथं कृतः ? । पुत्रः स्माह स एवात्र, जनैरानाय्य पृच्छयते ॥ ५७ ॥ आनाय्य बलसारोऽथ, दृढं निगडितः पदोः । भणितो दुर्मते!ऽस्मभ्यमपराद्धं बहु त्वया ॥५८॥ ततो यद् भवतो युक्तं, विधातुं तद्विधास्यते । परं तावद्वदास्माकं, कथं पुत्रः कृतस्त्वया ?॥५९॥ ततो भीतेन तेनोचे, सकुटुम्बाय मे यदि । जीवितं यच्छथ स्वामिं ( थेशाना ) स्तदा पुत्रं समर्पये ॥ ५६० ॥ हृष्टचित्तैस्ततः सर्वैर्वचने तस्य मानिते । गुप्तस्थानात्कुतोऽप्याशु, तेनानीतः स बालकः ॥६१॥ सर्वै तं बालमालोक्या-

सागरस्यान्तः, पतिताऽपि झषोपरि । सुखेनोत्तारिता तेन, कथं मलयसुन्दरी ? ॥ ७५ ॥ गुरुरूचे विपद्यास्या, धात्री वेगवती नृप ! । कुध्यानादम्बुधेर्मध्ये, करिरूपो झषोऽभवत् ॥ ७६ ॥ भारण्डास्यात्ततः श्रस्ता, तदा मलयसुन्दरी । पठन्त्युच्चैर्नमस्कारं, तस्यैवोपरि साऽपतत् ॥ ७७ ॥ नमस्कारं निशम्योहापोहं तस्य वितन्वतः । मत्यस्याजनि पूर्वस्या, जातेर्ज्ञानं विधेर्वशात् ॥ ७८ ॥ वालयित्वा ततो ग्रीवां, यावत्पृष्ठमभीक्षितम् । तेनोपलक्षिता तावत्, सुता मलयसुन्दरी ॥ ७९ ॥ सुताया हन्त जातास्या, दुःस्थावस्था किमीदृशी ? । किं करोम्यसमर्थोऽहं, सर्वोपकृतिकर्मसु ॥५८०॥ तद्वसन्तीं भुवं नीत्वा, मुञ्चाम्येतामतो बहिः । पुनर्यदि मिलत्येषा, कथञ्चिद्बन्धुभिः सह ॥ ८१ ॥ चिन्तयित्वेति मत्स्येन, तेनानीय सुखं सुखम् । विमुक्तैषा तटेऽम्भोधेः, यन्नास्त्यस्य गतिः पुरः ॥ ८२ ॥ वालयित्वा ततो ग्रीवां, पश्यन्नेतां पुनः पुनः । खिद्यमानो भृशं मत्स्यः, सागरान्तः स यातवान् ॥ ८३ ॥ अथ निष्पापमाहारं, गृह्णन् ध्यातनमस्कृतिः । पूरयित्वा च मत्स्यायुः, सुगतिं स गमिष्यति ॥ ८४ ॥ श्रुत्वेति वेगवत्यास्ते, सर्वे तत्र भवान्तरम् । इत्यूचुर्विदधे स्नेहो, जननीसदृशस्तया ॥ ८५ ॥ पुनः पप्रच्छ भूपालो, भगवन् ! पूर्वजन्मनि । किं किं मलयसुन्दर्या, तद्भर्त्रा च विनिर्ममे ? ॥ ८६ ॥ यद्दुःखानीदृशान्याभ्यां, द्वाभ्यामाप्तानि यौवने । गुरुरूचे महीनाथ !, साव-

धानैर्निशम्यताम् ॥८७॥ तत्रैव नगरे पृथ्वीस्थाने गृहपतिः पुरा । प्रियमित्राभिधो जज्ञे, समृद्धः पुत्रवर्जितः ॥८८॥
तस्य तिस्रः प्रिया रुद्रा, भद्रा च प्रियसुन्दरी । रुद्रा भद्रा च सोदर्यें, अभूतां स्नेहले मिथः ॥८९॥ तयोर्द्वयोरपि स्नेह-
लेशोऽपि दयितस्य न । एकस्यामेव सुन्दर्यां, प्रेमास्यासीदकृत्रिमम् ॥५९०॥ ततस्ताभ्यां महाराटी, न निवृत्ता कदाचन ।
द्वयोरपि तयोस्तत्र, सुन्दरीप्रियमित्रयोः ॥९१॥ प्रियमित्रस्य मित्रं तु, नाम्नाऽभूत् मदनप्रियम् । स पुनः सुन्दरीलुब्धो, नर्म
चक्रे तया सह ॥ ९२ ॥ अथान्यदा सुरूपां तां, रहस्थां प्रियसुन्दरीम् । कामार्थं याचमानं स, प्रियमित्रेण वीक्षितः
॥ ९३ ॥ ततः क्रुद्धेन सर्वं तद्बान्धवानां निवेद्य तत् । निर्भर्त्स्य बहुधा तेन, नगरान्निरवासि सः ॥ ९४ ॥ तत्रासी-
नास्ततः प्रोचुः, स्थविराः सर्वमप्यदः । साक्षान्नस्तदहो किञ्चित्, ज्ञानस्याविषयं न हि ॥ ९५ ॥ प्रियमित्रीयमित्ये-
तत्, प्रसिद्धमभिधानतः । गृहीतमपरैरस्मत्पुरेऽद्याप्यस्ति मन्दिरम् ॥ ९६ ॥ नृपः प्रोचे कथं जातः, पुरान्निष्कासितो-
ऽथ सः ? । गुरुरूचे चचालैकां, मदनः ककुभं प्रति ॥९७॥ मूढो गच्छन्नटव्यां स, निराहारो दिनत्रयम् । तृतीये दिवसे
प्राप, मदनो गोकुलं पुनः ॥९८॥ क्षुधार्त्तेनामुना केऽपि, चारयन्तो महीव्रजम् । गोपाला वीक्षिता दुग्धं, प्रार्थयांचक्रिरे
तथा ॥ ९९ ॥ दुग्धापितैः कृपावद्भिर्महीषीपयसा भृतः । समर्पितो घटस्तस्मै, पान्थाय स्पृहयालवे ॥ ६०० ॥

इतो गत्वा समीपस्थं, सरो दुग्धं पिबाम्यहम् । इति जल्पन्ननुज्ञातो, गोपैर्व्यावृतेऽथ सः ॥१॥ द्वे दिने क्षुधितोऽतिष्ठ-सहमेतदतः पयः । कस्मैचिद्यदि दत्त्वा प्राग्, भुज्यते सफलं ततः ॥ २ ॥ तस्येति ध्यायतश्चित्ते, गच्छतः पुण्य-योगतः । मिलितः संयमी मासोपवासी पारणाय यान् ॥ ३ ॥ अहो महान्ति पुण्यानि, यत्प्राप्तोऽद्यैव संयमी । प्रति-लाभ्य तदेनं स्वं, करोमि सफलं जनुः ॥ ४ ॥ ध्यात्वेति पुरतो भूत्वा, महाभक्त्या जगाद सः । गृहाणेदं पयः साधो!, प्रसीद त्वं ममोपरि ॥ ५ ॥ द्रव्यं क्षेत्रं च कालं च, भावं ज्ञात्वा च साधुना । यथेच्छमाददे दुग्धं, मदने-नार्जितं शुभम् ॥ ६ ॥ मदनोऽपि तमानम्य, मुनिं प्राप्तो जलाशयम् । कृतार्थं मन्यमानः स्वं, दत्तशेषं पयः पपौ ॥ ७ ॥ उपविश्य ततो यावत्, स सरोदुस्तटे जलम् । पातुं लग्नो द्रुतं तावत्, गतोऽन्तः स्खलितक्रमः ॥ ८ ॥ अगाधसलिले मग्नो, मृत्वाऽत्र मदनः पुरे । सुतो विजयभूपस्य, जज्ञे दानप्रभावतः ॥ ९ ॥ दत्तं कन्दर्प इत्यस्य,नामधेयं क्रमेण सः । पितर्युपरते पृथ्वीनाथोऽत्र नगरेऽभवत ॥ ६१० ॥ युग्मम् । प्रियमित्रोऽथ सुन्दर्या, सहितो व्यलसत्पुरे । ताभ्यां च रुद्राभद्राभ्यां, चक्रे वैरमनेकधा ॥ ११ ॥ अन्यदा प्रियमित्रोऽथ, यक्षं प्रति धनञ्जयम् । चचाल सपरीवारः, सुन्दर्या प्रियया समम् ॥ १२ ॥ प्राप्तो यावत् व्रजन्मार्गे, न्यग्रोधालङ्कृतां भुवम् । अभ्यायान्तं मुनिं तावद्दर्शैकं

हरणमक्षिपत् । निजे याने बभाषे च, शकुनं प्रत्यहन्यत ॥२६॥ ततश्चलत निर्भीकाः, पूजयामो धनञ्जयम् । इत्युक्ते सपरीवारौ, तौ गतौ यक्षमन्दिरम् ॥ २७ ॥ पूजयित्वा च तं यक्षं, यदोपाविक्षतां तकौ । दास्यैकया तदाऽवादि, जिनधर्मानुरक्तया ॥ २८ ॥ युवाभ्यामर्जितं भूरि, पापमद्य महामती । तादृग् क्षमाधरः साधुर्यदेष उपसर्गितः ॥ २९ ॥ ईदृशैः साधुभिः सार्धमपि हास्यं करोति यः । अत्रामुत्र च दुःखानि, लभते विविधानि सः ॥ ५३० ॥ तथा तथा तया दास्या, दम्पती तौ प्रबोधितौ । यथा दुर्गतिदुःखानां, भीत्या लग्नौ प्रकम्पितुम् ॥ ३१ ॥ पश्चात्तापं ततोऽत्यर्थं, कुर्वाणौ दीनमानसौ । निन्दन्तौ मुहुरात्मानं, जिनधर्माभिलाषुकौ ॥ ३२ ॥ प्रशंसंतौ भृशं दासीं, वलित्वा यक्षमन्दिरात् । तौ तस्यैव मुनेः पार्श्वमायातां दम्पन्ती पुनः ॥ ३३ ॥ युग्मम् । तदाऽहं पारयिष्यामि, लप्स्ये धर्मध्वजं यदा । इति निश्चित्य तत्रैव, तथैवास्थान्मुनिस्तु सः ॥ ३४ ॥ वन्दित्वाऽथ मुनिं धर्मध्वजं हस्ते समर्प्य च । तौ व्यजिज्ञपतामेवं, तौ रुदन्तावुभावपि ॥ ३५ ॥ अज्ञानपरतन्त्राभ्यामावाभ्यां भवतः प्रभो !। जगत्पूज्यस्य सा काऽपि, गुर्वी चक्रे विराधना ॥ ३६ ॥ अनन्तभवचक्रेऽस्मिन्नावां या भ्रामयिष्यति । श्वभ्रादिदुःखसम्पूर्णे, मृत्स्नापिण्डं कुलालवत् ॥३७॥ युग्मम् । तत्प्रसद्यावयोः सर्वं, त्वया साधो! क्षमावता । कारुण्या-

त्रिभिर्विशेषकम्। मृत्वा रुद्रा च सञ्जज्ञे, पुत्री जयपुरेशितुः। चन्द्रपालस्य कनकवती नाम्ना महीभुजः ॥५१॥ परिणीताऽमुना राज्ञा, श्रीवीरधवलेन सा। भद्राऽपि व्यन्तरी जाता, परिणामवशेन सा ॥ ५२ ॥ भ्रमन्ती साऽन्यदा पृथ्वीस्थानद्रङ्गं ससाययौ। प्रियादिमित्रसुन्दर्योर्दर्शने वैरमस्मरत् ॥ ५३ ॥ ततो रोषेण सा रात्रावुभयोरपि सुप्तयोः। पातयित्वा महाभित्तिं, तयोरुपरि जग्मुषी ॥५४॥ मृतौ तौ दम्पती शुद्धभावेनाथ तयोर्द्वयोः। प्रियमित्रो बभूवायं, तव पुत्रो महाबलः ॥५५॥ प्रियसुन्दर्यथो जज्ञे, सैषा मलयसुन्दरी। वधूस्तव महाराज!, श्रीवीरधवलात्मजा ॥५६॥ततो मलयसुन्दर्या, त्वत्पुत्रेण च यत्पुरा। तीव्रं ताभ्यां समं रुद्राभद्राभ्यां वैरमर्जितम् ॥ ५७ ॥ स्मरन्ती तं महावैरं, सा ज्ञात्वाऽवधिना सुरी। महाबलं कुमारेन्द्रं, पुनर्हन्तुं प्रचक्रमे ॥ ५८ ॥ किन्तु पुण्यप्रभावेण, कुमारस्य न किञ्चन। कर्तुं शशाक देहस्य, जलस्य ज्वलनो यथा ॥ ५९ ॥ ततो रोषेण सा रात्रौ, प्रसुप्तस्यास्य निर्भरम्। वासवेश्म समागत्य, चकारोपद्रवं सदा ॥ ६६० ॥ तया हृत्वा कुमारस्य, वस्त्रालङ्करणान्यपि। तत्र मुक्तानि यत्राप, कुमारो वटकोटरे ॥ ६१ ॥ कन्यामलयसुन्दर्या, योऽर्पितः पूर्वसङ्गमे। लक्ष्मीपुञ्जः कुमाराय, हारो निजहृदा समम् ॥ ६२ ॥ सोऽपि हारः कुमारस्य, शयितस्य तया निशि। अपजह्रे स्ववैरेण, व्यन्तर्या वासवेश्मनः ॥ ६१ ॥युग्मम्। पाश्चात्यजन्मनः स्वस्रा, दधत्या स्नेह-

सहिष्यसे । इति तत्कर्मवशतः, तन्नोद्धद्धो महाबलः ॥७७॥ अन्यदा रुद्रया पत्युर्मुद्रारत्नं वरं हृतम् । लोभाभिभूत-
या चौर्यचित्तया पूर्वजन्मनि ॥ ७८ ॥ दृष्टा सुन्दरदासेन, स्थितेन क्वापि गृह्णती । सा मुद्रां प्रियमित्रेऽथ, तां
पश्यति जगाद सः ॥ ७९ ॥ रुद्रा पार्श्वेऽस्ति सा मुद्रा, यूयमेवं किमाकुलाः ? । ततो रुद्राऽवदत् रोपात्, सुन्दरस्यास्य
सम्मुखम् ॥६८०॥ रे कूट छिन्नगन्धज्ञ, मद्वैरिन्नात्थ किं मृषा ? । अङ्गुलीयं मया क्वात्तं, ततो मौनेन संस्थितः॥८१॥
प्रियमित्रेण तत्पार्श्वात्, सामदण्डभिदादिभिः । मुद्रारत्नं तदादाय, रुद्राया लाघवं कृतम् ॥८२॥ वदन्त्या दुर्वचः कर्म,
रुद्रया यत्तदाऽर्जितम् । छिन्ना कनकवत्यास्तु, नासिका तेन कर्मणा ॥८३॥ भूतीभूतेन तैनैव, सुन्दरेण विधेर्वशात् ।
ज्ञात्वा ज्ञानात् भवं पूर्वं, स्थित्वा च तेन विग्रहे ॥ ८४ ॥ युग्मम् । रागोऽभूत्प्रियसुन्दर्यां, प्राग्भवे मदनस्य यत् ।
लुब्धो मलयसुन्दर्यां, कन्दर्प्पस्तेन हेतुना ॥ ८५ ॥ पूर्वं मलयसुन्दर्या, कुमारेणामुनाऽपि यत् । सुसाधुभ्यो ददे दानं,
जिनधर्मोऽपि पालितः ॥ ८६ ॥ तेनाभ्यां सर्वसामग्री, लब्धोत्तमकुलादिका । तथा मलयसुन्दर्या, यदाकुष्टो य-
तीति सः ॥८७॥ विप्रयोगस्तवैवास्तु, सदा सार्द्धं स्वबन्धुभिः । त्वं राक्षस इवात्यन्तं, भयकारीति भाषितः ॥ ८८ ॥
वारांल्लेष्टुप्रहारैस्त्रीन्, यद्रोषेणाहतो मुनिः । महाबलोऽपि मौनेन, यत्तस्थावनुमोदयन् ॥८९॥ द्वाभ्यामाभ्यां ततः पूर्वं, दृढं

तदा ताभ्यामाकर्ण्य चरितं निजम् । वैराग्येन गृहीतानि, व्रतानि गृहमेधिनाम् ॥ ३ ॥ मुनीनां भक्तिरावाभ्यां, सदा कार्या विशेषतः । इति चाभिग्रहोऽग्राहि, पार्श्वे केवलिनो गुरोः ॥ ४ ॥ अन्ये केऽपि तदा भव्या, बभूवुः संयमोद्यताः । श्राद्धधर्मोद्यताः केऽपि, शेषा भद्रकचेतसः ॥ ५ ॥ निजापत्यचरित्रं तौ, श्रुत्वा द्वावपि भूपती । जातौ संसारभीतान्तःकरणौ चरणोद्यतौ ॥ ६ ॥ ऊचतुश्च प्रभो ! कृत्वा, स्वस्वराज्यस्य चिन्तनम् । दीक्षामावां गृहीष्यावः, सत्वरं भवदन्तिके ॥७॥ मा कार्ष्ट प्रतिबन्धं भो, इत्युक्ते गुरुणाऽथ तौ । नत्वाऽगातां पुरं स्वं स्वं, राज्यचिन्तां च चक्रतुः ॥८॥ महाबलकुमाराय, सूरपालेन भूभुजा । पृथ्वीस्थानपुरैश्वर्यं, दत्तं तत्रैव तस्थुषा ॥९॥ महाबलसुतस्तस्मिन्, राजा शतबलाभिधः । बालोऽपि स्थापितो द्रङ्गे, सागरतिलकाभिधे ॥ ७१० ॥ श्रीवीरधवलेनापि, राज्ञा तत्रैव तस्थुषा । सुतोऽथ मलयकेतुर्निजे राज्ये नृपः कृतः ॥११॥ ततो द्वावपि राजानौ, स्वस्वभार्यासमन्वितौ । तस्य केवलिनः पार्श्वे, तौ गृह्णीतः स्म संयमम् ॥ १२ ॥ कतिचिद्दिवसांस्तत्र, स्थित्वाऽन्यत्र महीतले । विजहार गुरुस्ताभ्यां, राजर्षिभ्यां समन्वितः ॥ १३ ॥ तप्त्वा सर्वेऽपि ते तीव्रं, तपो गत्वा सुरालयम् । महाविदेहक्षेत्रे च, सिद्धिं यास्यन्त्यकर्मकाः ॥ १४ ॥ अथो मलयकेतूराट्, समापृच्छ्य महाबलम् । स्वसारं सुन्दरीं चापि, जगाम निजपत्तनम् ॥ १५ ॥ पुरे सागरतिलके, मुक्त्वा

महाबलोऽथ राजर्षिः, खड्गधाराव्रतं चरन्। ज्ञातागमः क्रमेणाभूत्, गीतार्थैकशिरोमणिः ॥ २९ ॥ एकाकित्वविहारेणानुज्ञातो गुरुभिस्ततः। विजहार महात्माऽसौ, सर्वत्रास्खलितव्रतः॥ ७३० ॥ मेरुवन्निश्चलः सर्वसहः सर्वंसहेव यः। सौम्यः सोम इवात्यन्तं, सदाचारी समीरवत् ॥ ३१ ॥ आकाशवन्निरालम्बः, शङ्खवच्च निरञ्जनः। संवेगरसनिर्मग्नो, भग्नाभ्यन्तरशात्रवः ॥ ३२ ॥ पुरे सागरतिलके, स तत्र विहरन् ययौ । विकालसमये यत्र, पुत्रः शतबलोऽस्य राट् ॥ ३३ ॥ त्रिभिर्विशेषकम्। उपलक्ष्याथ तं साधुं, गत्वाशूद्यानपालकः। व्यजिज्ञपत्सभासीनं, नृपं शतबलं मुदा ॥३४॥ महाबलमुनिर्देव !, पुरोद्याने पिता तव। एकाकित्वविहारेण, भ्रमन्नत्रागतोऽधुना॥३५॥राज्ञा शतबलेनाथ, हर्षरोमाञ्चशालिना। प्रीतिदानं ददे तस्मै, वनपालाय वाञ्छितम् ॥ ३६ ॥ सन्ध्यायाः समयो जातः, साम्प्रतं तद्दिवामुखे। आगमय्य प्रणंस्यामः, सर्वर्ध्या जनकं निजम् ॥ ३७ ॥ धन्योऽयं सकलो लोकः, पवित्रितमिदं पुरम्। पुण्यैरस्माकमाकृष्टो, यत्तातोऽद्य समागमत् ॥ ३८ ॥ इति जल्पन्नृपो मुक्त्वा, सामग्रीं पादुकादिकाम्। स्थितस्तत्रैव पितरं, ववन्दे भूरिभक्तितः ॥ ३९ ॥ द्रष्टुमुत्कण्ठितस्तातपादपद्मयुगं नृपः। कृच्छ्रेण गमयामास, निशां तां सपरिच्छदः ॥७४०॥ इतः सा कनकवती, पर्यटन्ती पुरे पुरे। तत्रैव नगरे तस्मिन्, समये दुःखिताऽऽगता॥४१॥

ज्वलितो भृशम् ॥५४॥ मुनिनापि तदा ज्ञात्वोपसर्गं मरणान्तिकम् । विहिताऽऽराधना चित्ते, तथैव स्थितिमीयुषा ॥५५॥ ततः प्रज्वलितो वन्हिर्मुनिं दग्धुं समन्ततः । प्रारेभे मूलतस्तस्याः, सुकृतस्येव सञ्चयम् ॥ ५६ ॥ महाबलमुनिः सम्यगुपसर्गं सुदुस्सहम् । सहमानस्तमात्मानं, लग्नो बोधयितुं ततः ॥ ५७ ॥ रे जीव ! भवता प्राप्तप्रायं तीरं भवाम्बुधेः । शुभभावमहापोतः, चारित्रेन चिरादिह ॥ ५८ ॥ ततः सद्भावनापोतमेतं सच्चित्तवायुना । तथा प्रेरय रे जीव !, यथाशु लभते तटम् ॥ ५९ ॥ दुःखानि यानि सोढानि, भवता नरकादिषु । तानि चिन्तयतो दुःखं, तवेदं जीव ! कीदृशम् ? ॥७६०॥ मा चिन्तयाशुभं किंचित्, त्वमस्या उपरि स्त्रियाः । येनैषा ते सखा कर्मवनोन्मूलनकर्मणि ॥ ॥ ६१ ॥ बाह्याङ्गं ज्वलयन् धर्मदेहमभ्यन्तरं न च । ज्वलनोऽप्यहितं किञ्चित्करोत्येष न तेऽधुना ॥ ६२ ॥ इत्थं तथा भृशं तस्य, प्रवृत्ता शुभभावना । उत्पन्नं केवलं ज्ञानं, घातिकर्मक्षयाद्यथा ॥ ६३ ॥ शुक्लध्यानानलमध्ये, बहिश्च ज्वलितेऽनले । भवोपग्राहिकर्माणि, भस्मीकृत्य क्षणादपि ॥६४॥ अन्तकृत्केवलीभूत्वा, स साधुः प्राप निर्वृतिम् । जन्ममृत्युजरादीनां, ददौ चाशु जलाञ्जलिम् ॥६५॥ युग्मम् । ज्वलने ज्वलितप्राये, कांदिशिका गता क्वचित् । पापिष्ठा कनकवती, सा भ्रष्टा शुभकर्मतः ॥ ६६ ॥ सञ्जाते च प्रभाते स, यावच्छतबलो नृपः । तत्रा-

न्द्रोऽपि, कुर्वाणो मन्त्रिभिर्भृशम् । सम्बोधितोऽपि नात्याक्षीत्क्षणमात्रमपि क्वचित् ॥ ७८० ॥ ज्ञात्वा तातस्य तादृक्षं, दुस्सहं मरणं ततः । सहस्रबलभूपोऽपि, न्यमज्जत् शोकसागरे ॥ ८१ ॥ द्वयोरपि तयो राज्ञोः, पितृशोकभरा भृशम् । रामलक्ष्मणवत्कृष्णबलदेववदस्फुरत् ॥ ८२ ॥ इतश्चामलचारित्रा, साध्वी मलयसुन्दरी । एकादशाङ्गभावज्ञा, प्रतिबोधपरायणा ॥ ८३ ॥ तप्यमाना तपस्तीव्रं, कर्ममर्मच्छिदोद्यता । कृतोत्पन्नावधिज्ञाना, गुरुभिः श्रीमहत्तरा ॥ ८४ ॥ सत्सन्देहतमांसीह, जघानाऽर्कप्रभेव सा । वित्रस्तकुमतोलूका, भव्याम्भोजप्रबोधिका ॥ ८५ ॥ महाबलमुनेर्ज्ञात्वा, निर्वाणं तनयं निजम् । प्रबोधयितुमायाता, पुरे तत्र महत्तरा ॥ ८६ ॥ वसतावुचितायां सा, स्थिता साध्वीसमन्विता । राज्ञा शतबलेनैत्य, महाभक्त्या च वन्दिता ॥ ८७ ॥ आलापितो महाराजः, प्रसन्नाननया तया । गिरा मधुरया श्रोतृश्रवणामृतकुल्यया ॥ ८८ ॥ पिता तव नराधीश !, महासत्त्वशिरोमणिः । उपसर्गे स्त्रियास्तस्याः प्रपेदे शिवसम्पदम् ॥ ८९ ॥ सर्वं कलत्रपुत्रादि, त्यज्यते यस्य हेतवे । सह्यते च महादुःखं, तपोलोचक्रियादिकम् ॥७९०॥ दुर्लभं यदि तत्प्राप्तं, स्थानं शाश्वतमुत्तमम् । त्यक्तो भवश्च पित्रा ते, शोकोऽद्यापि ततः कथम् ॥ ९१ ॥ महानिधानमाप्नोति, यद्यभीष्टो जनो निजः । विजृम्भते महाशोकः, तत्किं कस्यापि मानसे ? ॥ ९२ ॥

मुक्तबन्धे ग्रहोत्तीर्णे, महापदि च नीरुजि । इष्टे जनेऽत्र जायेत, शोकः किं वा महोत्सवः ? ॥ ९३ ॥ सुदुरसहाग्नि-पीडापि, न चिन्त्या च पितुरत्वया । प्रहारान्न सहन्ते किं, जयश्रीलम्पटा भटाः ॥ ९४ ॥ साधयन्तोऽथवा विद्यां, नरा दुःखं सहन्त्यलम् । सिद्धिरत्यद्भुता येन, विना कष्टं न जायते ॥९५॥ तातपादा नता नैव, कर्त्तव्येति च नाधृतिः । जनकाराधनासक्तो, यत्त्वं प्रागधुनाऽपि च ॥ ९६ ॥ तद्विमुञ्च पितुः शोकं, परिभावय संसृतिम् । परित्राणं न शोकेन, किञ्चिद्भवति देहिनाम् ॥ ९७ ॥ भवं दुःखालयं विद्धि, सङ्गमं स्वप्नसन्निभम् । लक्ष्मीं विद्युल्लतालोलां, जीवितं बुद्बुदोपमम् ॥ ९८ ॥ यदि युष्मादृशोऽप्येवं, गुरुशिक्षाविचक्षणाः । शोकं कुर्वन्ति तद्धैर्य, विवेकोऽपि क्व या-स्यति ? ॥ ९९ ॥ एवं धर्मोपदेशैः स, बोधितो नृपतिस्तया । संविग्नो गतशोकश्च, लग्नो धर्मे विशेषतः ॥ ८०० ॥ नित्यं महत्तरापादान्, वन्दते स्म नरेश्वरः । उपदेशान् शृणोति स्म, शासनोन्नतिमातनोत् ॥ १ ॥ चैत्यं च कारया-मास, सिद्धिस्थाने मुनीशितुः । प्रतिमां च पितुस्तत्र, विविधानुत्सवानपि ॥ २ ॥ जनानां तत्र सर्वेषामुपकारं विधा-य सा । आपृच्छ्य नृपतिं तस्मात्, विजहार महत्तरा ॥ ३ ॥ पृथ्वीस्थानपुरं साऽऽपत्, प्रतिबोधयितुं क्रमात् । पितृशोकाकुलं भूपं, सहस्रबलसंज्ञितम् ॥ ४ ॥ धर्मोपदेशदानेन, सहस्रबलभूपतिः । सम्बोध्य सपरीवारस्तया

धर्मे स्थिरीकृतः ॥५॥ कतिचिद्दिनपर्यन्ते, नन्तुमुत्को महत्तराम् । राजा शतबलोऽप्यागात्, भ्रातृस्नेहेन तत्र सः ॥ ६ ॥ महत्तरां ववन्दाते, शृणुतःस्म च देशनाम् । तौ द्वावप्यासिषेवाते, धर्ममेकाग्रमानसौ ॥ ७ ॥ आनर्चतुस्त्रिकालं तौ, जिनं सत्सत्त्वशालिनौ । पात्रेभ्यो ददतुर्दानं, तपः शक्त्या च चक्रतुः ॥ ८ ॥ विधिना सङ्घपूजां तौ, दानशालाश्च चक्रतुः । वारयामासतुर्लोकमधर्मान्मारितोऽपि च ॥ ९ ॥ प्रतिग्रामं प्रतिद्रङ्गं, जिनेन्द्रभुवनैस्तथा । भूषयामासतुर्भूमिं, सकलामचलापती ॥ ८१० ॥ जिनचैत्येषु सर्वेषु, स्नात्रपूजोत्सवादिभिः । अष्टाह्निकाः सदातीर्थरथयात्राश्च चक्रतुः ॥ ११ ॥ दृढस्नेहौ सदा जैनधर्मभारधुरन्धरौ । बान्धवौ तस्थतुस्तौ द्वौ, कुर्वाणौ शासनोन्नतिम् ॥ १२ ॥ सिषेवे सर्वलोकोऽपि, जिनधर्मं नृपानुगः । नास्फुरन्नपरे धर्मास्तारा इव खगोदये ॥ १३ ॥ कांश्चित् कांश्चित् जनान् धर्मविशेषेऽथ क्वचित् क्वचित् । स्थापयित्वा गताऽन्यत्रापृच्छ्य पुत्रौ महत्तरा ॥ १४ ॥ प्रभूतान्यथ वर्षाणि, पालयित्वा यतिव्रतम् । तुच्छयित्वा च कर्माणि, तपोयोगसमाधिभिः ॥ १५ ॥ कृत्वा चाराधनां प्रान्ते, श्रीमन्मलयसुन्दरी । जगाम द्वादशे कल्पे, साऽच्युताख्ये महत्तरा ॥ १६ ॥ युग्मम् ॥ ततश्च्युता विदेहे सा, समुत्पद्योत्तमे कुले । क्रमेण चरणं लात्वा, गमिष्यति सुरालयम् ॥ १७ ॥ ततो मलयसुन्दर्या, एकश्लोकार्थचिन्त-

नात् । बभूव गोष्पदं स्थाने, स्थाने व्यसनसागरः ॥ १८ ॥ तथाऽन्येषामपि ज्ञानमाधारः सङ्कटे भवेत् । ज्ञानाभ्यासः सदैवातः, कर्त्तव्यः सुविवेकिभिः ॥१९॥ यथा मलयसुन्दर्या, पालितं शीलमुज्ज्वलम् । सङ्कटेऽपि तथाऽन्याभिः, पालनीयं प्रयत्नतः ॥८२०॥ उपसर्गेऽपि तादृक्षे, महाबलमुनीन्दुना । यथा चक्रे क्षमा वर्या, कर्त्तव्याऽप्यपरैस्तथा॥२१॥ यथा ताभ्यां व्रतं तीव्रं, दम्पतीभ्यां विनिर्मितम् । अन्यैरपि तथा कार्यं, सिद्धिसौख्याभिलाषुकैः ॥ २२ ॥ आशातना यथा ताभ्यां, विदधे पश्चिमे भवे । दुःखहेतुर्मुनीन्द्रस्य, कर्त्तव्या न तथैव सा ॥ २३ ॥ श्रीमत्पार्श्वजिनेन्द्रनिर्वृतिदिनाद्याते समानां शते, सञ्जज्ञे नृपनन्दना मलयतः सुन्दर्यसौ नामतः । एतस्याश्चरितं यथा गणभृता प्रोक्तं पुरा केशिना, श्रीमत्शङ्खनरेश्वरस्य पुरतोऽप्यूचे मयेदं तथा ॥ ८२४ ॥

इत्यागमिकश्रीजयतिलकसूरिविरचिते ज्ञानरत्नोपाख्याने मलयसुन्दरीचरित्रे शीलावदातपूर्वभववर्णनो नाम चतुर्थः प्रस्तावः ।

सम्पूर्णं श्रीमलयसुन्दरीचरित्रम् ॥

---

इति श्रेष्ठि देवचन्द्र लालभाई—जैनपुस्तकोद्धारे—ग्रन्थाङ्कः ३४.



इति श्रीजयतिलकसूरिकृतं मलयसुन्दरीचरित्रं समाप्तम्.

इति श्रेष्ठि देवचन्द्र लालभाई–जैन पुस्तकोद्धारे–ग्रन्थाङ्कः ३४.